इति जयश्रीताल[1] ॥ ६२

जयमङ्गलताले तु कर्त्तव्यं सगणद्वयम् ॥ ८५ ॥

[2]तत्तिधिता । धिङ्गथउ । क्रिडि क्रिडित ।

रत्थुगिणि । तकिथउ गणगण द्रें

। । ऽ । । ऽ

इति जयमङ्गल[3] ॥ ६३

[4]सगणात् प्लुतश्चैव ताले श्रीरङ्गसञ्ज्ञके ।

[5]धिग्दितकि । थुग्डिदिगि । थुगुतक्किता ।

तत्तत । तट्कुटि धिटि टें

। । ऽ । ऽ̂

इति श्रीरङ्ग[6] ॥ ६४

हंसनादे लघुमध्यङ्गौ[7] द्रुतयुग्म प्लुतस्तथा ॥ ८६ ॥

[8]तत्तकट । धिकट थांहृ त्थुग थांहृ

थांहृं गुथ । तत्ता । धिंद्धिद्रें गगंट

---

1 A tala of 8 मात्राs cf —रगणा त्र गुरुश्चैव जयश्रारिति कथ्यत । भरता० ७४५७ The जयश्री of स० चूडा०, p 13, no 38 is different, but the text does not seem to be certain Also see, स० रत्ना० ५ २८२

2 P and O —ताकधिङ्गथउ किाड किडि तरत्थु ।गणि ताक्थउ

3 This is a tala of 8 मात्राs, also in भरता० ७४६०, स० चूडा० p 14 no 45 Both the texts show exactly identical definitions Also see, सं० रत्ना० ५ २८०

4 P —सगणाप्लुत० O —सगणात्प्लुत०

5 P —धिाग्ड ताक थुाग्ड ।दगि थुग्र ताक ता तत्त टट कुटि धिद्धि टें
O —।धगिड तकि थोंग्डि दिगा थुगु तागि तातत टउुग्टि धिाद्ध द्र

6 A tala of 8 मात्राs cf —श्रीरङ्गसञ्ज्ञक ताळे सगणौ प्लुतौ मतौ । भरता० ७४६३, and स० चूडा० p 11, no 12 also see स० रत्ना० ५ २५५

7. H & K —लघुमध्यग० । O reads सिंहनाद for हंसनादे

8 P —तत्तक ।धक्ट थांहृ त्थग तत्त धिाद्ध द्र गणगण टे । । ऽ ० ० इति हंसनाद ॥
O —ततक्ट धिक्ट थांहृ थांहृं त्थुग तत्त धिाद्द द्रें गलगणट ऽ ० ० ऽ इति हंसनाद ॥

।ऽ००ऽ

इति हसनाद[1] ॥ ६५

साम्प्रत ते च भण्यन्ते ताला[2] ये नवमात्रिका ।
जयतालो वसन्तश्च रङ्गोद्योतनसज्ञक ॥ ८७ ॥
जगणाल्लो द्रुतौ पश्च जयताले प्रकीर्तिता ।

[3]थुगुतकि नगझिगि । ता धिंटें । द्रगणता ।
थुगिता । धिद्धि । नग झिगि दुग झिगि द्रै

।ऽ।।००ऽ

इति जयताल[4] ॥ ६६

वसन्तताले विजयो[5] नगणो मगणस्तथा ॥ ८८ ॥
[6]तद्धि । कथउ । धिद्धिकद्धिच्छ(?क?) थउ ।
गाधिंटें । थउधिंटें

।।।ऽऽऽ

इति वसन्त[7] ॥ ६७

रङ्गोद्योतनताले तु मगणाल्लप्लुतावपि[8] (मगणो ल्प्लुतावपि) ।

---

1 A tala of 8 मात्राs also in भरता० ७ ४५३ and in स० चूडा० p 12 no 31 Also see स० रत्ना० ५ २७३

2 P —ताल्य न च मात्रिका । O —ताग य न च मात्रृका ।

3 P —थुगु तकि नग झिगि ता टड द्रगण धिद्धि नग झिग दुग झिगि द्र O follows P

4 A tala of 9 मात्राs The भरता० ७ ४६२ has a जयताल of 10 मात्राs—।ऽ।।।००ऽ स० चूडा० p 14 no 48 gives the same definition as the भरताणव But स० रत्ना०, ५ २७२ makes it—।ऽ।।००ऽ as in our text

5 P —विनयौ

6 P —तद्धिकथउ धिद्धिकथउ गाधट धिंटं थउ गाडट O omits the whole definition and a major part of पाटs except थउ धाधंटें ऽऽऽ इति वसन्त ॥

7 A tala of 9 मात्राs cf —वसन्तताले कतव्या नगणा मगणस्तथा । भरता० ७ ४८५ स० चूडा० p 17, no 84

8 P —मगणा ल्प्लुतावपि । O —मगणाल्प्लुतावपि ।

[1]ॐ धुधुक ता धुक नग झिगि धुधुदु धुदु दधुगा
नगदुग झिगि झिगि ॐ
ऽ ऽ ऽ । [2]

इति रङ्गोद्योतन[3] ॥ ६८

तालानथ प्रवक्ष्यामि दशमात्राधिकान् यति ॥ ८९ ॥

रङ्गप्रदीपनाख्यस्तु पर्वपितापुत्रकस्तथा ।
पार्वतीलोचनश्चैव सिंहविक्रीडितोऽपि च ॥ ९० ॥

'रङ्गप्रदीपने' ये ) ताले गुरू लघुर्गुरु प्लुत ।

[4]तत्थुट थदि गिडिदि गिडिदि थदि थें झ झिगिदथों ।
किडि किडि दथउ थों ।
ऽ ऽ । ऽ ऽ̄

इति रङ्गप्रदीपक[5] ॥ ६९

पर्वपितापुत्रके ताले प्लुतान्त्य [6]मगणप्लुतौ ॥ ९१ ॥

[7]झें नन्त सिण नम्वि रिकट्टुग झिगिता ।

---

1. P and O – [illegible] नग झिगि [illegible] नग झिगि दुग झिग झ
2. A tala of 10 मात्रा though included in the group of talas of 9 मात्रा cf [illegible] । भरता० ७ ४४७ and सं० मुक्ता० p 11, no 23 also see सं० रत्ना० ५ ३११
3. P – [illegible] O omits १ 90
4. P – [illegible] ऽ ऽ ऽ ऽ̄ इति रङ्गप्रदीप ॥
   O – [illegible]
5. A tala of 10 मात्रा But in भरता० ७ ४५२ ( [illegible] ) it is of 9 मात्रा – । । ऽ ऽ ऽ The text may be incorrect, since सं० मुक्ता० which usually follows भरता० reads – [illegible] । सं० मुक्ता० p 12 no 30 thus making it = ऽ ऽ । ऽ ऽ̄ Also see सं० रत्ना० ५.३११
6. H & K – [illegible]
7. P – [illegible]
   [illegible] ऽ̄ ऽ ऽ ऽ

ततन्ट धिद्धिक्ट । दगड दगड ता ता
धुधुता झिझिझिं
ऽऽऽऽऽ

इति षट्पितापुत्रक[1] ॥ ७०

[2]मगणाल्लो द्रुतो गौ च पार्वतीलोचने द्रुतौ ।

[3]टखुझि टखुझि टकुझि गुटखुटि गिदिगिदिदिथा
ददरथों ततरथों तकि धिकि । थुदिगण धिद्धि
थथ उदिगण तत्त
ऽऽऽ।०ऽऽ००[4]

इति पार्वतीलोचन[5] ॥ ७१

---

O —झें नस दिण गन ।ख — —धुग तागा ता। तत कट धि धिकट दग झा धुधु ता नि झि झ ऽऽऽऽऽ

1 This is a tala of 12 मात्राs The षट्पितापुत्रक of भरतार्णव, also of 12 मात्राs is however different षोडेषा गरनार्णव षट्पितापुत्रक स्मृत । भरता० ७४३८, also in स० चूडा० p 10, no 3 There is no such tala in स० रत्ना०

2 H. & K —मगणा लौ द्रुतौ

3 P —टखुसि टुटुझि टखुमि गु झुडि गिदि गिन्दि दथों ना दथों तथि धिकि थुदिगण तत ऽऽऽ०।ऽऽ००
O —टखुझ टखुर्मि टखुमि कुट झुाद गिदि गिन्दि त्था तवि धिकि थुदिगण थउदिगण तत्त

4 H. & K —ऽऽऽ।।०ऽऽ

5 This is a tala of 12½ मात्राs if P. reading is accepted but if with H, we take two लघुs after मगण it would be of 13 मात्राs Obviously, the scribe of H has forgotten to add ०० after ऽऽऽ।।०ऽऽ

The पार्वतीलोचन of भरतार्णव, ७४८९ is—००।।००ऽऽ।।।।ऽ।।, a tala of 16 मात्राs The स० चूडा० p 18, no 93 gives two varieties and since the second variety of स० चूडा० shows ऽऽऽ।ऽऽ०० the reading मगणाल्ल of P is preferable It must however be remembered that the second variety of स० चूडा० is of 12 मात्राs omitting one द्रुत in the middle The पार्वतीलोचन of स० रत्ना० ५ २९६ is—ऽऽऽ।ऽऽऽ००

सिंहविक्रीडिते ताले लो पगा यगणाल्प्लुत ॥ ९२ ॥

[1]ततनता । धिधिधिद्धि झें थर्हि कथउ । गत्थउगा ।
तकुट दाता । मकट् थुगा । नग थुगत्ता । ततग्ट
धिद्धिकुट । द थिरगि द थिरगि द्रों
।। ऽ ऽ । ऽ ऽ ऽ

इति सिंहविक्रीडित[2] ॥ ७२

पूर्णचन्द्राभिधस्ताल स्थित्या चन्द्रकलाकृति ।
द्रुतमाने द्रुतैर्ज्ञेयो लघुभिस्त्रिंशन्मात्रिक ॥ ९३ ॥

एको द्वौ च त्रयश्चैव चत्वार पञ्च च क्रमात् ।
एव च [3]व्युत्क्रमेणैते द्रुतास्तु लघवोऽथवा ॥ ९४ ॥

[4]ततता । तगधिगि ता । तग धिगि थउँद्र ।
नग झिगि दुगगि ता । झिझि नग्ग त्थिण ।
झें तउुग पुपु ता झिझिगिद्रि थिधि ता ।
लघुभिश्च ॥

इति पूर्णचन्द्रताल[5] ॥ ७३

1 P —झ थर्हि कथउ कथउ गा ता ता ततग थुग ततग कटाथाड कटद धिगगद धिरगिगें । । ऽ ऽ ऽ ऽ इति सिंहाविक्रान्ति ॥
O follows P but reads कथउ only once, and gives । । ऽ ऽ । ऽ ऽ ऽ following H.

2. This is a tala of 15 मात्राs The सिंहविक्रीडित of भरता० ५ ४४८ is a ताल of 19 मात्राs— । ऽ ऽ । ऽ ऽ ऽ । ऽ The न० चूणा० p 12, no 25 makes it a ताल of 17 मात्राs by adding ऽ at the end of the type given by our text The स० रत्ना० ५ २७२ gives yet another variety of 24 मात्राs

3 H & K —त्वैं च वा क्रमेण

4 P.—ता तता तगधिग ता तग गग थउ द्रैं नगझिगि दुगगगि ता झि झि नग्ग त्थिण झें तउुट पुपु ता झगझिगि थिधि ता । लघुभिश्च ॥ O reads झगझिगा द्रैं ता at the end and follows P otherwise

5. This is a tala of either 15 + 15 द्रुतs or 15 + 15 लघुs i e of 15 or 30 मात्राs respectively. There is no such tala in भरतार्णव,

पृथ्वीकुण्डलतालस्तु जायते पश्चिमान्तिकः ।
¹तालरत्नाकरं नाम तस्यास्माभिः प्रतिष्ठितम् ॥ ९५ ॥

पृथ्वीकुण्डलताले स्युर्नयौ नो नममा यभौ ।
यभौ तौ यगणश्चैव जगणाच्च गुरु क्रमात् ॥² ९६ ॥

³ताकि धिक थुग धिद्धि । दैथउ । तकथुगु धिकि ।
थुगि थुदाँ । तत्ता । दिरि गिडि दत्थुउ गत्थउ गा दिगि ।
थुग थुंग थौं । गत्थउ धिगि तगि ता । कत्थउ गा ।
तकि धिगि थुगु ता तत था । किट कट दथौं ।
थुग किथु गुगण झिगि दुग झिगि झिझ्झें ।
गण गण दुग झिझझिगण दुगझि दुगझिगि
झें झिं धुधु । डिं धुधु । धुधु ताझें । णगझिगि झें ।

सं० चूडा० or सं० रत्नाकर. But cf the following from Bharata-kośa, p. 376—
पूर्णताल —देशीताल
एकायेकान्तनौ वृद्धिहासाभ्यां क्रमतो द्रुतैः ।
बीजपूराकृतिधरैः पञ्चविंशतिसङ्ख्यकैः ।
पूर्णतालः समादिष्ट पूर्णविश्रम्भरावृता(त) ॥
—कुम्भः

1. P.—तालरत्नावरनामतस्यास्माभिः०
2. H.—पृथ्वाकुण्डलताले स्युर्नयौ नौ नममायभौ ।
यभौ तौ यगणश्चैव जगणाश्च गुरु क्रमात् ॥
O.—reads नयो तो न समायभौ in v. 96b P.—नयौ तौ नममायभौ०
The Bharatakośa, p. 380 quotes vv. 95-96 as below :—
पृथ्वीकुण्डलतालस्तु जायते पश्चिमान्तिकः ।
तालरत्नाकर नामे(मै)तस्यास्माभि प्रतिष्ठितम् ॥
पृथ्वीकुण्डलताले स्युर्नौ यस्तो ननमायनौ ।
यतौ तौ यगणश्चैव जगणाच्च गुरुः क्रमात् ॥
I I I, I S S, S S I, I I I, S S S, S I I I S S, S I I, I S S, S I I, S S I,
I S S, I S I, S-४० गुरव, २० लघवः
—सुधा(कलश)
3. P.—तकि धिकथुगु धिद्धिँ थउ तक थुगु भिकि थुगि थउ दां तत्त दिरि गडि दत्थउ गत्थउ गा । गदिगि दिगि थुगु थुगु थों गथउ धिगि तगिता (तागिता in O.) कत्थउ गा तकि धिगि थुगु ता ता तत्ता । किड किड दथौं (किट किड दौंदथौं in O)

तत्त । तत्त । तग धिगि कि तत्त । गधिकि ततत्त ।
तहि खहिं त्तिकुट थहि थहि थरि थरि गि ।
तग थुगु धै द्धं टें द्रें

।।।। ऽऽऽऽ ।।।।। ऽ।। ऽ।।। ऽऽऽ।।।
ऽऽऽ।। ऽऽ। ।ऽऽ ।ऽ

प्रस्तारजाश्च ये ताला [1]ससङ्ख्यानिर्मिताश्च ये ।
तालरत्नाकरत्वात्तेऽमुष्मिन्सोपाश्रया कृता ॥ ९७ ॥

इति पृथ्वीकुण्डलताल[2] ॥ ७४

इति सोपाश्रयस्तालसमुच्चयो निर्णयः ॥

सङ्ख्यादियुक्त कलितैन्तसार प्रस्तारविस्तारममु विदित्वा ।
यो वेत्ति सोपाश्रयतालमान सङ्गीतविज्ञेषु स एव धन्य ॥ ९८ ॥

इति मलधारगच्छमण्डनश्रीराजशेखरसूरिशिष्यवाचनाचार्यश्रीसुधाकलशविरचित स्वोपज्ञ सङ्गीतोपनिषत्सारोद्धार प्रस्तारादिसोपाश्रयतालप्रकाशनो नाम द्वितीयोऽध्याय[3] ॥ छ ॥

---

थुग थुधु गणग ( गि in O ) झिगि दुग त्गिगि झिङ्गें । गण गण दुग झिदुग ( झिंगण दुग in O ) झिाग थ झिं घुघु डिं घुघु घुघु ता थ णग ( णग ) झिाग थ तत्त तत्त ताग धिगि तत्त नग ( ताग in O ) धिाग ततत्त तहिं पहि त्तिकुट थहि थरि थरि गितगथु मुद्र ( थक थुग द्रीं in O ) ।।।।ऽऽऽऽऽऽ ।। ।।ऽऽ ऽऽ ।।।ऽऽऽ ।। ऽऽऽ ।।ऽऽ।। ऽऽऽऽ।ऽ।

The मात्राs in O are —।।।।ऽऽऽऽ ।।।ऽऽऽऽ ।।।ऽऽऽ ।।। ऽऽऽ।। ऽऽ।। ऽ।ऽ

1 P —ससज्ञानिर्मिताश्च०

2 There is no such tala in भरता० स० चूडा० or स० रत्ना० This tala of 60 मात्राs according to v 95 of text is called तालरत्नाकर by Sudhakalasa who probably introduced this tala just as Sarngadeva introduced a tala after his own name in his सं० रत्ना० ५ ३११

3 O reads the colophon as— इति सङ्गीतोपनिषत्सार प्रस्तारादिसोपाश्रयी तालप्रकाशनो नाम द्वितीयोऽध्याय ॥

# तृतीयोऽध्यायः ।

यो [1]वीतरागस्य परात्मनोऽपि
गुणानुबद्धं[2] गणरागशुद्धम् ।
पुण्यैकलोभात् परया च भक्त्या
गायेत्सुगीतं स तु मुक्तिगामी ॥ १ ॥

उद्ग्राहादौ ध्रुवपदे तथाऽऽभोगे गणा[3] शुभाः ।
निधेया शुभदास्ते हि गीतकर्तुं[4] प्रभोरपि ॥ २ ॥

के गणाः कुत उत्पन्नाः किंरूपाः किंफलप्रदाः ।
किंदेवाः कथमुच्चार्याः किंचिन् तल्लक्ष्म तूच्यते[5] ॥ ३ ॥

सृष्टिपालनसंहारकर्तारो भुवनत्रये ।
ब्रह्म विष्णु हरास्तेऽतो [6]विश्वं विश्वं त्रयात्मकम् ॥ ४ ॥

सर्वशुक्रमयो ब्रह्मा विष्णुर्मांसमयः स्मृतः ।
शम्भुश्चास्थिमयो देहे पिण्डेष्वेवं (पिण्डश्चैवं[7]) त्रयीमयः ॥ ५ ॥

एका मूर्तिस्त्रयो भागा ब्रह्माविष्णुमहेश्वराः[8] ।
एकैव हि त्रयीभूता त्रयी चाप्येकता गता[9] ॥ ६ ॥

अतस्तत्त्रयसंयोगान्मूर्तयोऽष्टौ विजज्ञिरे ।
पृथ्व्यप्तेजांसि वायुः खं सूर्यचन्द्रात्मलक्षणाः ॥ ७ ॥

---

1 P.—गीतरागस्य.  2 P.—गुणानुविद्धं
3 H & K—गुणा.  4. P.—च गीकर्तुं
5 P.—किञ्चिल्लक्ष्मसूच्यते ।  6 P.—विश्वं विश्व H. & K.—विश्वविश्वं
7. P.—पिंड चैव.
8 H. & K—°महेश्वर ।  P.—विष्णुमहेश्वरा ।
cf : Brhaddesi, p. 21. — तथा चाह नारदः—
देवकुल्येमुख्यता षड्जगान्धारमध्यमा ,
एतेषां देवता ज्ञेया ब्रह्माविष्णुमहेश्वराः ॥
9. H & K—गता ।

पृथ्व्यादिपञ्चभूतैर्युक् सूर्यचन्द्रात्ममंयुतम् ।
नृदेहं निर्ममे सृष्टा स्वाष्टमूर्तिमयं परम् ॥ ८ ॥

मर्त्यो महोत्तमश्चैवं गीतकर्ता[1] स एव हि ।
गीतप्रभु स च प्रायो गणास्तच्छुभसूचका ॥ ९ ॥

धात्रादेशात् सरस्वत्या लोकाना हितहेतवे ।
शुभाशुभादिज्ञानार्थं विवक्षा वाङ्मये कृता. (ता) ॥ १० ॥

[2]ह्रस्वस्वरयुताश्चैव वर्णास्ते लघवो मता ।
एवं दीर्घाश्च गुरव· पृष्ठस्था[3] युक्तवर्णत· ॥ ११ ॥

लघुगुर्वात्मका वर्णास्तैस्त्रिभिर्निर्मिता गणाः ।
[4]त्रिवर्णयोगप्रस्ताराद्रूपाण्यष्टौ भवन्ति हि ॥ १२ ॥

अष्टावपि गणास्ते च वाङ्मये त्रिकयोगजा ।
एकस्मिन् व्यात्मके शम्भौ मूर्तयोऽष्टैव[5] जज्ञिरे ॥ १३ ॥

क्रमोत्पन्ना गणास्तेऽष्टौ न्यस्तास्तन्मूर्तिषु क्रमात् ।
तद्देवास्तु ते जातास्तन्मयत्वाच्च तत्फला.[6] ॥ १४ ॥

किंरूपाः किमभिधाना क्रमोत्पन्ना कथं तु ते ।
प्रस्तारन्यासनामादि तदुत्पत्तिरथोच्यते ॥ १५ ॥

आदावीप्सितवर्णाना रूप [7]सर्वं गुरुं न्यसेत् ।
लिखेल्लघुं मुख्यगुरोरध शेषं तु पूर्ववत् ॥ १६ ॥

लघोरधो गुरर्ह्रस्वो गुरोस्त्वन्यच्च पूर्ववत् ।
[8]पूर्वतुल्यानि रूपाणि स्युर्यावत् सर्वह्रस्वकम् ॥ १७ ॥

[9]प्रस्तारस्यनिर्माणकृते च सुस्वबोधकम् ।

---

1. H. & K.—गीतवार्ता
2. H & K — ह्रस्वा स्वरयुता.
3. P.—पृ स्था.
4. H & K —त्रिवर्णयोग.
5. H. & K —एकस्मिन्नात्मके शम्भौ मूर्तयोऽष्टौ च.
6. P.—तत्फला.
7. P.—सर्वं गुरु
8. P.— पूर्वानुल्यानि.
9. H & K —प्रस्तारं रूपनिर्माण.

सङ्ख्याङ्कित बालधिया प्रकारान्तरमुच्यते ॥ १८ ॥

[1]स्थानद्विगुणिताङ्काद्या( ) मभिशा वर्णपङ्क्तय ।
गुरुभिर्लैस्तथैकानि स्थानद्विगुणवर्द्धितै[2] ॥ १० ॥

[3]यत्त(त)म रूपमुद्दिष्ट नष्ट वा नीयते च यत ।
सङ्ख्याङ्कार्द्धे समे ह्रस्वो गुरु समेऽर्द्ध अर्द्धभाक् ॥ २० ॥

[4]न्यस्ता सोपानवद्रण्या सैका वर्णमितैकका ।
उपर्युपरि विक्षेप्या एकैक मुञ्चता मुखात् ॥ २१ ॥

सर्वगुरुरूपमाद्यमेकद्वयादि लघून्यत ।
अन्त्य च सर्वलघुक कल्पिते रुचिवर्णने ॥ २२ ॥

इति कलितम् ।

मयरा सतजा भो नो वणा स्युर्गणपूर्वगा ।
तत्तत्क्रमयाश्चूडामणौ हि कथिता यत ॥ २३ ॥

[5]इति सक्षेपकथनाद्गणा अष्टाप्युदीरिता ।
प्रकट्या सुगमैर्वाक्यै कीर्त्यन्ते ते सलक्षणा[6] ॥ २४ ॥

---

1 P —स्थानद्विगुणिताङ्काद्याऽभिख्यिता वर्णपङ्क्तय ।

2 H & K —॰वर्द्धित ।

3 H & K add before this समस्त वाङ्मय व्याप्त त्रैलोक्यमिव विष्णुना । as 20ᵃ and take as 20ᵇ our v 23ᵃ of P But obviously this order is not correct in H verse 20ᵃ of H is not found in P

v 20 above (following P ) is omitted in H The H thus reads as follows —

समस्त वाङ्मय व्याप्त त्रैलोक्यमिव विष्णुना ।
मयरा सतजा भो ना वणा स्युगणपूर्वगा ॥ २० ॥
तत्तत्क्रमयाश्चूडामणौ हि कथिता यत ।
सर्वगुरुरूपमाद्यमङ्कद्याल्लिघून्यत ।
अत्यतसर्वलघुक लिखिते रुचिवर्णन ॥ २१ ॥ इति कलितम् ॥

4 H — न्यस्ता सोपानवद्रण्यासैका मितैकिका ।
उपर्युपरि विक्षेप्या एकक मुचता मुखात् ॥ २२ ॥

5 This is v 23 in H 6 P —सुलक्षणा

[1]त्रिगुरुर्मगण प्रोक्तो भूतत्त्वी तनुते श्रियम् ।
[2]लघुर्गुरू च यगणो वृद्धिकृज्जलतत्वग[3] ॥ २५ ॥

[4]गुरुर्लघुर्गुरुर्मध्ये मरण रगणोऽग्निभृत् ।
प्रवासदायी वायुस्थ सगणो लद्वय गुरु ॥ २६ ॥

खतत्त्वी शून्यफलकृत् तगणो गौ गुरुर्लघु ।
[5]सूर्यदेवो रोगकारी जगणो लगुरुर्लघु ( लगुरुर्लघु ) ॥ २७ ॥

[6]गुरुर्लघू च भगण कीर्तिकृच्चन्द्रदैवत ।
नगणस्त्रिलघुश्चाय परमात्मा सुखप्रद ॥ २८ ॥

मयौ [7]शिरस्थौ भौमाप्यो[8] प्रान्तस्थौ[9] च गणौ मता[10] ।
चन्द्राद्यधिष्ठितो नेतुर्गीतादौ ते शुभप्रदा ॥ २९ ॥

पद्ये वर्णभवे गीते ताले स्युरुपयोगिन ।
अष्टौ गणास्त्रिजास्त्वेव द्विजा आर्यादिकेष्वपि ॥ ३० ॥

वृद्धेरेकादिवर्णाना षड्विंशत्यक्षरावधि ।
एकाक्षरादि पाद स्यात्[11] पद्य भाषासु षट्स्वपि ॥ ३१ ॥

पद्येभ्योऽधिकवर्णा स्युर्दण्डका[12] बहवोऽपि ते ।
गाथेत्युक्त यच्छन्दोगन्दि( न्धि )च्छन्दासि पिङ्गले ॥ ३२ ॥

तालान् सोपाश्रयानुक्त्वा गणोत्पत्तिसुदीर्य च ।
स्वरादिरागभाषाणामुत्पत्तिरथ कथ्यते ॥ ३३ ॥

रागरागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गभेदत ।
अखिलस्यापि नादस्य प्रकारा पञ्च कीर्तिता ॥ ३४ ॥

---

1 This is v 24 in H  2 H —लघुर्गुरु
3 H —जलतत्त्वग  4 The verse is omitted in H
5 H omits 27ᵇ and reads 28ᵃ in its place
6 This is 25ᵇ in H  7 H —शिरस्थौ
8. H —भौमाप्यौ  9 H —तान्तस्थौ
10 H —मतौ  11 H —पादान्त.
12 P —स्युर्दण्डिका

पञ्चस्वप्येषु चकैक स्वरोऽग्रामेहि जायते ।
श्रुतिभिर्मूर्च्छनाभिश्च तस्तेरालसिमिस्तथा ॥ ३५ ॥
षड्जर्षभौ च गान्धारो मध्यम पञ्चमस्तथा ।
धैवतश्च निषादश्च ते स्वरा सप्त नामत ॥ ३६ ॥
कण्ठोरस्तालुरसनानासाशीर्षभिधेषु च ।
षट्सु स्थानेषु जातत्वात् षड्ज स्यात् प्रथम स्वर ॥ ३७ ॥
कण्ठात् सञ्जायते षड्ज ऋषभो हृदयोद्भव[1] ।
गान्धारस्त्वनुनासिक्यो मध्यमो नाभिसम्भव ॥ ३८ ॥
उरस शिरस कण्ठात् सञ्जात पञ्चम स्वर ।
[2]ललाटे धवत विद्यान्निषाद सर्वसन्धिज ॥ ३९ ॥
सप्तस्वराणामुत्पत्ति शरीरे परिकीर्तिता[3] ।
नादात्मकानामेतेषा रूपवर्णादि वर्ण्यते ॥ ४० ॥
षण्मुख स्याच्चतुर्हस्त पाणिभ्यामुत्पले वहन्[4] ।
वीणाशोभिकरद्वन्द्व षड्जस्तामरसप्रभ ॥ ४१ ॥
कुल सुपर्वज जम्बूद्वीप ब्रह्मा च दैवत ।
शृङ्गारे च रसे[5] गेयोऽमुष्य गाता तु पावक[6] ॥ ४२ ॥
मयूरो वाहन त्वस्य स्वगानुकरणात्पुन ।
लक्ष्म षड्जस्वरस्योक्त्वा द्वितीयस्याथ भण्यते ॥ ४३ ॥[7]

---

1 P — हृदधाभव    2 P — ल्ला धैवत विद्यान्निपाद
3 P — परिमार्तिता
cf with vv 37 40 the following from *Matanga*—
कण्ठादुत्तिष्ठते षड्ज ऋषभ शिरस स्थित ॥ ८५ ॥
नासायाश्चैव गान्धार उरसो मध्यम स्वर ।
उरस शिरस कण्ठादुत्थित पञ्चम स्वर ॥ ८६ ॥
तालुदेशात्समुत्पन्नो धैवतस्तु महामुने ।
निषादस्तु समुत्पन्ना नित्य सर्वसन्धिज ॥ ८७ ॥
—वृ देशी स्वरनिर्णय, ८५, ८७, पृ २०
4 H & K — दधत्    5 P — शृगारे रसे
6 H & K — गेयो मुष्यगाता तु पावक ।    7 H & K — तस्य

इति षड्जस्वरलक्षणम् ॥

एकवक्त्रश्चतुर्हस्तः पाणिभ्यां कमले दधत्[1] ।
वीणां बिभ्रत् कराभ्यां च ऋषभो नीलवर्णभृत् ॥ ४४ ॥

अग्निस्तु दैवतं शाकं द्वीपं गाता च पद्मभूः ।
रसो हास्योऽस्य यानं गौर्गान्धारस्याथ लक्षणम् ॥ ४५ ॥

इति ऋषभलक्षणम् ॥

गान्धारस्त्वेकवदनो गौरवर्णश्चतुष्कर ।
वीणाफलाब्जघण्टाभृत्करः स्यान्मेषवाहनः ॥ ४६ ॥

शङ्करो दैवतं क्रौञ्चो द्वीपं सुपर्वजं कुलम् ।
विष्णुर्गाता रसो वीरोऽसुष्य ज्ञेयोऽथ मध्यमः ॥ ४७ ॥

इति गान्धारलक्षणम् ॥

मध्यमश्चैकवक्त्रः स्याद्धेमवर्णश्चतुष्करः[2] ।
सवीणाफलगौ हस्तौ सपद्मवरदौ[3] तथा ॥ ४८ ॥

भारतीदैवतं द्वीपं [4]कुशं वंशं सुपर्वजम् ।
गाता चन्द्रो रसः शान्तः क्रौञ्चो वाहनमस्य तु ॥ ४९ ॥

इति मध्यमलक्षम् ॥

पञ्चमोऽप्येकवदनो भिन्नवर्णश्च षट्कर ।
वीणाकद्वये शङ्खाब्जे चापि वरदाभयौ ॥ ५० ॥

---

1. H, & K.—वहन.

The iconography of *svaras* given here may be compared with that given in *Bṛhaddeśī* of *Mataṅga*, chp. on *svaranirṇaya*, p. 59 It will be seen that our text is later in as much as it gives in greater detail the different iconographic forms.

Also see *Saṅgītamakaranda*, p 4, vv 30 ff.

2. P—॰श्चतुःकर ।   3. P—स्वपद्मवरदौ.

4. H. & K.—कुरु.

स्वयम्भु(म्भू)र्दैवत[1] द्वीप शाल्मलि (श्च) नृपशज ।
कोकिला वाहन गाता नारद प्रथमो रस ॥ ५१ ॥

इति पञ्चमलक्षणम् ॥

धैवतो गौरवर्ण स्यादेकवक्त्रश्चतुर्भुज ।
[2]वीणाकमलखट्वाङ्गफलशोभितसत्कर ॥ ५२ ॥
शम्भुस्तु देवत श्वेत द्वीप स्याद्द्विज[3] कुलम् ।
रसो भयानकश्चाश्वो यान गाता तु तुम्बरु[4] ॥ ५३ ॥

इति धैवतलक्षणम् ॥

निपादो गजवक्त्र स्याच्चित्रवर्णश्चतुर्भुज ।
त्रिशूलपद्मपरशुबीजपूरकभाकर ॥ ५४ ॥
गणेशो दैवत क्रौञ्चो द्वीप वश सुपर्वजम् ।
गाता च तुम्बरु शान्तो रस स्याद्वाहन गज ॥ ५५ ॥

इति निपादलक्षणम् ॥

स्वरेषु सप्तस्वे(स्वे)तेषु प्रत्येक ते त्रयोऽपि हि ।
मन्द्रमध्यतारसज्ञा ग्रामा स्थानस्थितिप्रदा ॥ ५६ ॥
वीणाहस्ता अमी देवा कण्ठहृन्नाभिसम्भवा ।
[5]पुरुषाद्गनय श्वेतपीतरक्ताङ्गशोभिता ॥ ५७ ॥

इति ग्रामलक्षणम् ॥

सप्तस्वरस्थानकृत्सु स्वस्वस्थानस्थितेषु च ।
प्रत्येक मूर्च्छनैकैका ग्रामेष्वेषु प्रजायते ॥ ५८ ॥
[6]बाधा[7] लाला समाधानी पूरणी चापराजिता ।
विगलिता [8]सयमिनी मद्रा च भ्रमिताक्षरा ॥ ५९ ॥

---

1 P — स्वयम्भुर्देवत
2 P — व णाकलस० It is difficult to say whether कमल or धमरु is the original reading
3 P — स्याद्द्विज
4 P — तुम्बुरु
5 P — पुरुषा ङ्गनय
6 P — बाधा
7 P — लला
8 P — संयमनी

[1]द्राविता मङ्गला रामा सुखकुञ्जयशेखरा ।
रमणी शोभिना नादा तथाभिचरिता[2] मता ॥ ६० ॥

नादचक्रामिका चण्डा[3] मूर्च्छना नामतस्त्वमू ।
वीणाहस्ता इमा देव्यो लयकृत्सुमदा मता. ॥ ६१ ॥

[4]प्रथमस्वरजो ग्रामो मन्द्रलग्ना च मूर्च्छना ।
निषादे तारचण्डे च भूमौ मर्त्यगलेन हि[5] ॥ ६२ ॥

एवं वीणादिलक्ष्याः[6] स्युर्मूर्च्छनास्त्वेकविंशति ।
भवन्त्येकोनपञ्चाशत्तानास्तांश्च भणाम्यहम् ॥ ६३ ॥

इति मूर्च्छनालक्षणम् ॥

(अथ तानाः)

[7]तत्र तेना यदुच्यन्ते तानास्ते स्वरसंस्थिताः ।
[8]आत्मस्थितिर्निर्गम्यानस्यापकर्तार एव ते ॥ ६४ ॥

ताना-नाना-ननानन्ना-[9]तन-नेतक-नतरा.[10] ।
[11]विज्ञेयास्ते क्रमात् तानाः [12]सप्त सप्त स्वरे स्वरे ॥ ६५ ॥

---

1. H.—[illegible]. 2. P.—[illegible].
3. P.—[illegible].
The list of *mūrchanās* given here differs from other lists given in *Cūḍāmaṇi*, etc., see *Bharatakoṣa*, p. 501. The list also differs from *Saṅgītaratnākara*, I. 4. vv. 12 ff; *Nāṭyaśāstra*, Ch. XXVIII. vv. 30 ff., and *Saṅgītamakaranda*, p. 7; *Dattila*, p. 3. vv. 21 ff. For *mūrchanās*, esp. cf. *Bṛhaddeśī*, pp. 22 ff.
4. P.—[illegible]. 5. H. & K.—[illegible].
6. H. & K.—[illegible]. 7. H. & K.—[illegible].
8. H. & K.—[illegible]. 9. H. & K.—[illegible].
10. H. & K.—[illegible]. 11. H. & K.—[illegible].
12. H. & K.—[illegible]. Acc. to Narada there are 49 *tānas* while according to Bharata they are 84 in number, see *Bharatakoṣa*, pp. 244-46.

धूम्राभा कृष्णरसनान्याली शूकरवाहना ।
द्रविडी रक्तचीरा स्याद्धेमाभा[1] मत्स्यवाहना ॥ ८१ ॥

मालवकैशिकी[2] गारा कैश्चगा[3] रक्तचीवरा ।
रक्ताभा देवगान्धारी पीतचीराश्वयायिनी[4] ॥ ८२ ॥

श्रीरागानुगता भाषा वीणाहस्ता षडप्ययम् ।
रागस्याथ वसन्तस्य रूपवर्णादि कीर्त्यते ॥ ८३ ॥

इति सभापाश्रीरागलक्षणम् ॥

षड्नन्दनो दशकरो वसन्तो विद्रुमप्रभ ।
सुतालशङ्खखट्वाङ्गफलचक्राब्जभृत्कर[5] ॥ ८४ ॥

सवीणौ च करौ यस्य वरदाभयदौ तथा ।
वाहन कोकिला चैत्रे वैशाखे गीयते स च[6] ॥ ८५ ॥

[7]आन्दोल [8]कैशिकी चैव तथा प्रथममञ्जरी ।
गुण्डगिरी देवशाखा[9] रामग्री षट्(ड्) वसन्तजा ॥ ८६ ॥

अथासा [10]रक्ष्म चान्दोला दोलारूढा सुवर्णभा ।
शेषा अपि च गौराङ्ग्यो दोलास्था नादपूरिता ॥ ८७ ॥

इति सभायवसन्तलक्षणम् ॥

भैरव श्वेतवर्ण स्यादेकवक्त्रोऽष्टहस्तभाक् ।
वृषयान इविनामा [11]क्र(काल)भैरवरूपभृत् ॥ ८८ ॥

सर्पत्रिशूलखट्वाङ्गनपमालाभिरन्वितै ।
वीणापाशकपालैश्च पाणिभिर्भूषितोऽष्टधम् ॥ ८९ ॥

1 H & K —स्याद्धूम्राभा॰
2 H & K —माल्वकौशिको
3 H & K —कावगा
4 H & K —॰श्वग मिनी ।
5 P —॰फलकाऽऽब्जभृत्कर
6 H & K —राग
7 P —अदोल
8 P —कौशकी
9 P —देवशाखा
10 P —रक्षा दोल
11 P —क्रि

भैरवी गुर्जरी चैव भाषा वेलाकुली तथा ।
कर्णाटी रक्तहंसा च भाषा षट्(ट्) भैरवानुगाः ॥ ९० ॥

नीलांशुका रक्तवर्णा भैरवी शुकवाहना ।
गौरवर्णा पीतवस्त्रा गुर्जरी मेषगामिनी ॥ ९१ ॥

श्यामाङ्गी कृष्णवसना भाषा गरुडवाहिनी ।
वेलाकुली रक्तचीरा गोरा स्याद्वृषयायिनी ॥ ९२ ॥

कर्णाटी हस्तिगमना नीलाङ्गी रक्तचीवरा ।
हंसयाना पीतवस्त्रा रक्तहंसा प्रगल्भा ॥ ९३ ॥

## इति सभापभैरवलक्षणम् ।

पञ्चमस्य च रागस्य सभापस्याथ लक्षणम् ।
पञ्चम पञ्चवक्त्र स्याद्दशहस्तो गजेन्द्रग ॥ ९४ ॥

वीणापाशफलाङ्कुशाब्दवाङ्काब्ज(ङ्कवर)भृत्कर[1] ।
[2]तालाभयादियुक्पाणि श्यामलाङ्गश्च कीर्त्यते ॥ ९५ ॥

पञ्चमरागस्य अमू(पञ्चमस्य च रागस्यामू) षड् भाषा मतान्तरे[3] ।
त्रिगुणा स्तम्भतीर्थी स्यादाभीरी[4] ककुभा[5] तथा ।
[6]वइराडी च सामेरी षड् भाषा मञ्चमे मता ॥ ९६ ॥

---

1 P —॰अन्नवरभृत्कर । In H also it was originally ॰अञ्जवरभृत्कर । but either the scribe or some later reviser has corrected it

2 P —तालाभया दि॰

3 From P between v 100 and v 101 where it is out of place H rightly omits this line P reads here मतान्तरे मेघरागाम् षडपि भाषा ज्ञया । This does not seem to be part of a verse, even though P makes it 95a This changes the different पादs of the following verses which is adjusted by P by making v 98 a three line verse Moreover this line of P is out of place here and could have been between v 100 and v 101 where also it seems to be out of place

4 H —स्यादाभेरी 5 P —ककुभा 6 P —वर्णेराडी.

विचित्रं जन्तुवद्वक्त्र तेषा देह नराकृति ।
[1]तत्तत्स्वरकृतानीणाकरातानां( ) प्रकीर्तिता ॥ ६६ ॥

इति तानालक्षणम् ॥

अथ श्रुतय ॥

नादान्ता निष्कला गूढा सकला मधुरा तथा ।
कामाङ्गा मधुरा श्यामा तारा चन्द्रानना शुभा ॥ ६७ ॥

असम्पूर्णा वरा पूर्णा रञ्जिका वातिना[2] परा ।
[3]प्रसन्नमदना वामा बाला मधुमती तथा ॥ ६८ ॥

द्वाविंशतिश्च श्रुतय एता ज्ञेया स्वरानुगा ।
[4]श्रुतिभि कियतीभिर्स्तु युक्तास्ते च स्वरा क्रमात् ॥ ६९ ॥

चतु श्रुतिस्त्रिश्रुति स्याद्विश्रुतिश्च[5] चतु श्रुति ।
[6]त्रिश्रुतिश्चतुश्रुतिश्च[7] द्विश्रुतिश्च स्वरा मता ॥ ७० ॥

इति श्रुतिलक्षम् ॥

श्रुतिभिर्मूर्च्छनाभिश्च ग्रामैस्तैश्च सहिता ।
[8]मता सप्तस्वरास्तैस्तु[9] रागभाषादय कृता ॥ ७१ ॥

(अथ रागा )

तावन्तस्ते तु रागा स्युर्यावन्त्यो जातजातय ।
षोडशसहस्रसङ्ख्यास्ते[10] रागा गोपीकृता मता ॥ ७२ ॥

---

1 P.—तत्तत्स्वरकृतो  2 H & K —रानका रातिका

3 H & K —प्रसन्ना वदना  P —प्रसन्ना मदना

4 H & K — Omit this 69[b] and insert 70[a] below in its place For श्रुतिs see *Bharatakośa* pp 682 f 955 f *Sangitaratnakara*, 1 3 10 ff Our list differs from the lists of *Natyaśāstra*, and *Sangitaratnākara* etc

5 P omits च  6 H & K —त्रिश्रुतिश्च चतु श्रुति

7 P —त्रिश्रुतिश्च  8. P —मता

9 H & K —,स्तै तु  10 P —सु

त्रिगुणा महिषयाना च[1] श्यामला कृष्णचीवरा ।
स्तम्भनीर्थी पीतवस्त्रा रक्ताङ्गा सर्पवाहना ॥ ९७ ॥

नीलाम्बरा च गोरा स्याद्राभीरी[2] केकिगामिनी ।
ककुभा रक्तसिचया रक्ताङ्गी वस्त्रवाहना ॥ ९८ ॥

[3]वर्द्दराडी भिन्नवणा च कृष्णवस्त्रोष्ट्रयायिनी ।
श्वेतवर्णा नीलवस्त्रा सामेरी स्यान्मृगासना ॥ ९९ ॥

## मभापपञ्चमरागलक्षणम् ॥

अथ मेघाभिधो राग एकवक्त्रोऽष्टपाणिभृत् ।
मेघवर्ण केकिगामी पीताम्बरधरोऽपि च ॥ १०० ॥

शङ्खचक्रगदावीणापद्माभयवरासिभृत् ।
करोच्चयो यस्य बभा तस्य भाषा षडप्यथ ॥ १०१ ॥

[4]बङ्गाला मधुरा चैव कामोदा चोश्म(चाक्ष)साटिका ।
देवगिरी च देवाला तासां लक्षणमुच्यते ॥ १०२ ॥

बङ्गाला पीतवसना गौराङ्गी खड्गगामिनी ।
पीतवस्त्रा च नीलाङ्गी[5] मधुरा सारसासना[6] ॥ १०३ ॥

नीलाम्बरा गौरदेहा कामोदा क्रौञ्चधाविनी ।
गौराङ्गी पीतवसना हसगा चाश्मसाटिका[7] ॥ १०४ ॥

---

1 P omits च 2 H — स्याद्राभरी

3 P — ब मेराडा

4 P adds before this पञ्चमरागस्य अम् पन भाषा मतान्तरे । which is out of place here and should rather have been after v 95 where P reads मतान्तर मधरागाम् (गाडम्) षडपि ज्ञेया । which *again should have been here* But both may be interpolations as मतान्तरs do not follow in succeeding verses

5 H — नीराङ्गा

6 P — रा सारना । H — सारसवाहना

7 P — चाक्ष्माटिका H — चाक्षमाटिका

[1]तार्क्ष्यासना देवगिरी मेघाभा रक्तचीवरा ।
मयूरवाहना श्यामा देवाला नीलचीवरा ॥ १०५ ॥

इति मभापमेघरागलक्षणम् ।

नट्टनारायणो रागो नीलवर्णश्चतुर्भुज ।
शङ्खचक्रगदावीणाकर[2] स्याद्गरुडासन[3] ॥ १०६ ॥

तोटिका मोटिका चैव नट्टा डुम्बी तथैव च ।
मल्ला(ल्हा)री[4] सिन्धुमल्हारी[5] नट्टनारायणाश्रया ॥ १०७ ॥

अथासा लक्षण रक्ता तोटिका सम्बरासना ।
मोटिका नीलवसना गोरा[6] कुर्कुर(कुट)वाहना ॥ १०८ ॥

नट्टा क्रौञ्चासना पीतचीवरा मेघदेहभा ।
हेमवर्णा रक्तचीरा डुम्बी स्यात्खरवाहिनी ॥ १०९ ॥

नीलाभा रक्तवसना मल्लारी(ल्हारी) च कपोतगा[7] ।
सिन्धुमल्ला(ल्हा)रिका गोरा पीतचीरा गजासना ॥ ११० ॥

वीणाहस्ता नादरूपा भाषा[8] षट्त्रिंशदात्मगा ।
रागभावे त(प्रास्त)थोक्त्वाथ रागाङ्गादिरुच्यते ॥ १११ ॥

इति मभापनट्टनारायणलक्षणम् ॥

देवशाख्या मालवश्रीर्धनश्रीर्दीपकादय ।
स्वचतुर्जातिसयुक्ता रागाङ्गा( ) कथिता अमी ॥ ११२ ॥

इति रागाङ्गाः ॥

बृहती पुलन्धिका[9] चैव सन्धेरी ललितादय ।
भाषाङ्गा त्रिविधा भीमपलासीप्रमुखा अपि ॥ ११३ ॥

इति भाषाङ्गाः ॥

---

1 H —तार्क्षमना 2 H —वीराकर
3 P —स्याद्गरुपन
4 H reads गांधारा which however is corrected as मल्हारी in margin
5 P —सिन्धुमगारी 6 H —गौरी.
7 P.—च पोतगा 8 P —भाषा 9 H & K —पुलिन्द्रिका

वैराटिका वृद्धहसा तथा सौराष्ट्रिकादय ।
[1]शोक शकादयश्चान्ये क्रियाङ्गेषु प्रकीर्तिता ॥ ११४ ॥

इति क्रियाङ्गानि ॥

[2]केदारवर्णस्थानाख्यास्तथा मालविकादय ।
कर्णाटबङ्गालमुख्या सर्वे गौडा उपाङ्गगा ॥ ११५ ॥

इत्युपाङ्गानि ॥

ज्ञेया [3]रागेषु रागाङ्गा क्रियाङ्गोपाङ्गकावपि[4] ।
तथा भाषासु भाषाङ्गा[5] स्वस्वदेशभवा[6] अपि ॥ ११६ ॥

रागाश्चतुर्विधा देश्यशुद्धमालिगछाइला[7] ।
ओडव षाडव पूर्णोऽपूर्णोप्येति[8] चतुर्विधा ॥ ११७ ॥

नृसञ्ज्ञिता मता देवा देव्यश्च महिलाभिधा ।
वीणाहस्ता नादरूपा सर्वे ज्ञेया अमी बुधै ॥ ११८ ॥

इति रागरागाङ्गक्रियाङ्गोपाङ्गभाषाभाषाङ्गलक्षणम् ॥

रचितास्ते त्वलङ्कारा सप्तस्वरमुखाक्षरै ।
एषु सर्वेषु रागेषु स्वराणा कारण हि तत् ॥ ११९ ॥

[9]अन्योन्यस्वरवर्णाना सान्ताना तु प्रयोगत ।
ये जायन्ते वर्णगुम्फास्तेऽलङ्कारा[10] प्रकीर्तिता ॥ १२० ॥

तेऽलङ्कारा द्वादशैवमाद्या शिवमते मता ।
साद्या अष्टादशमतास्ते तु गौरीमते तथा ॥ १२१ ॥[11]

---

1 P —शोकप्रकाशकाश्चाय
2 P —केदारवर्णा०
3 P —रागेषु
4 H & K —क्रियाङ्गोपाङ्गगावपि
5 P —भाषाङ्गा
6 P —स्वस्वदेवभवा.
7 H & K —,छायला
8 P —पूर्णाऽपूर्णोऽथेति.
9 P —अन्योन्य
10 H & K —,स्ते त्वलङ्कारा.
11 For a different view see *Sangitasamayasara* of Parsvadeva I 44 ff p 4

अष्टादशान्तर्लीनास्तु द्वादशैते शिवोद्भवा. ।
अतो गौरीमतोद्धर्तोस्तानेवाष्टदश ब्रुवे ॥ १२२ ॥

प्रसन्नश्च परावृत्तो निवृत्त.[1] परिवर्तक ।
आक्षिप्त सम्प्रदानश्चोद्ग्राहश्चोपलोलकः ॥ १२३ ॥

क्रामको (क्रमको) बहुमानश्च घातको मल्लिनस्तथा ।
हुङ्कारोद्योतविद्योता सुबाहुर्मोदमन्मुखा ॥ १२४ ॥

अष्टादशेत्यलङ्कारा नामत कथिता अमी ।
[2]क्रमव्य(व्यु)त्क्रमविन्यस्ताष्टवर्णानां क्रमो ह्यथ ॥ १२५ ॥

मारीगमपधनीसा ॥ प्रसन्नः ॥ १ ॥

सानीधपमगरीसा ॥ परावृत्त ॥ २ ॥

[3]सारी (।) सारीग (।) सारीगम (।) सारीगमप [सारीगमपध]
सारीगमपधनी (।) सारीगमपधनीसा ॥ निवृत्त ॥ ३ ॥

[4]सानीसा (।) नीधसा (।) नीधपसा (।) नीधपमसा (।) नीधपमगसा (।)
नीधपमगरीसा (।) नीधपमगरीसा ॥ परिवर्तक ॥ ४ ॥

रीसा (।) गरीसा (।) मगरीसा (।) पमगरीसा[5] (।) धपमगरीसा (।)
नीधपमगरीसा (।) सानीधपमगरीसा ॥ आक्षिप्त[6] ॥ ५ ॥

[7]सानी (।) सानीध (।) सानी सानीधप (।) सानीधपम (।)
सानीधपमग (।) सानीधपमगरी (।) सानीधपमगरीसा (।)
सम्प्रदान. ॥ ६ ॥

---

1. P.—निवृत्त . H —निवर्त.
2. H. & K.—क्रमविन्यस्त• Cf. with the alamkāras treated here, the section on alamkāras in Sangitaratnākara, 1. 6
3. H. & K.—सारी• व सारीगम सारीगमपध सारीगम प सारीगमपधनी सारीगमपध• नीसारीग ॥ निवृत्त ॥ ३ ॥
4. H. & K.—सानीसा नीधसा नीपसा नाधमसा नीधमगपगरीसा नाधपमगरीसा धप• सारीगमपधनी सारीसा (॥) परिवर्तक ॥ ४ ॥
5. Omitted by P. 6. H & K —आक्षिप्त ॥
7. P.—सानी सानी सानीधप सानीपधम सानी धपमग सानीधपमगरी सानीधपमगरीसा । सम्प्रदान ॥ ६

[1]रीसा । गरी । मग । पम । धप । नीध । सानी । उद्वाह ॥ ७ ॥

[2]सानी । नीध । धप । पम । मग । गरी । रीसा । उपलोल्क ॥ ८ ॥

[3]सारी । रीग । गम । मप । पध । धनी । नीसा । क्रामक ॥ ९ ॥

[4]सानी । नीध । धप । पम । मग । गरी । रीसा । बहुमान ॥ १० ॥

[5]साग । सारी[6] । रीम । गप । मध । पनी । सनीमा( धसा )[7] ।
घातक ॥ ११ ॥

[8]सानी । साध । नीप । धम । पग । मरी । गसारीसा ( गसा । रीसा )
मलिन ॥ १२ ॥

सारीगम मगरीसा । सानिधप पधनीसा । हुकार ॥ १३ ॥

[9]सासा । रीनी । गध । मप । पग । धग । नीरीसासा ।
( नीरी । सासा ) । उद्योत ॥ १४ ॥

[10]सामपसा (।) सारीग (।) धनीसा (।) सानीध (।) गरीसा ।
सापमसा । विद्योत ॥ १५ ॥

[11]सारीसा सामसा । माननीसा । साधसा[12] । सुबाहु ॥ १६ ॥

---

1 P does not give the danda marks.

2 P —सामानी । नीनी धधध पपप ममम गगग रीरीरीसा । उपगाल्क ॥ ८ ॥

3 P does not give the danda marks

4 P —मानी नीधधपपममगगरारीसा । बहुमान ॥ १० ॥
H reads मग for पम

5 P does not give danda marks

6 सारी is here not necessary but both P and H read it

7 P reads सा for सनीमा

8 P omits daṇḍa marks

9 P omits danda marks, and reads उद्योतक for उद्योत
H reads सासारी ॥ नी । गध । etc which seems to be a scribal error for the text given above

10 H —reads सामपसा । सारीग । etc P omits daṇḍa marks

11 P —सारीसा सागसा साननीसा साधपसा । etc

12 H reads सापधसा for साधपसा

[1]मपगध । रीनीसासा । सासानीरी । धगमप । प्रौढः ॥ १७ ॥

[2]सागपनीमा । सारीमधसा । साप (।) रीध (।) गनी (।)
मसा (।) सरिगरीसा । गमपमगा । पधनीधपा ।
सानीधनीसा । धपमपधा । मगरीगमा । साम । रीप ।
गध । मनी (।) पसा । साप (।) नीम (।) धग (।) परी (।)
मसा । इति सन्मुखः ॥ १८ ॥

एवमलङ्कारा ज्ञेयाः ॥ १८ ॥

| | |
|---|---|
| १ २ ३ ४ ५ ६ ७ ८<br>मा री ग म प ध नी मा<br>सूचिकावत् सूक्ष्म स्वर आद्य<br>प्रौढ. प्रान्तेश्चेति प्रमल. । १ | ८ ७ ६ ५ ४ ३ २ १<br>सा नी ध प म ग री मा<br>सर्पकाय इव पतत् स्वर<br>इति परावृत्त. । २ |
| १ २ ३ ४ ५ ६ ७ ८<br>सा री ग म प ध नी सा<br>बालचन्द्रवत् क्रमेण स्वरै-<br>र्वर्द्धित इति निवृत्त. । ३ | ८ ७ ६ ५ ४ ३ २ १<br>सा मा ध प म ग री सा<br>घण्टानादवत् पूर्वोक्तस्वरा<br>ह्रीयन्ते इति परावर्तक । ४ |
| १ २ ३ ४ ५ ६ ७ ८<br>सा रीं ग म प ध नीं सा<br>गोवत्सवदग्रे गत्वा गामेवाभ्येति<br>इति आक्षिप्तः । ५ | व्युत्क्रमस्वरा विजयिनृपवत्स्वस्थानस्थः<br>पृष्ठस्थान्देशान्मन्दं२ सर्वान्भुनक्ति<br>( इति ) सम्प्रदानः । ६ |
| क्रमस्वरा ध्रुवशववपरः परेण<br>प्रकाश्यते इति उद्वाहः । ७ | व्युत्क्रमस्वराः पूर्वजवत् वृद्धान्२<br>प्रकाशयन्ते ( इति ) उपलोलक. । ८ |
| क्रमस्वराः पितृपुत्रवत् पितु<br>पुन स एव पिता तस्यान्य-<br>पुन इति कामक । ९ | व्युत्क्रमस्वराः राज्यक्रमवत्<br>पूर्वपूर्वराज्यं गृह्णाति इति<br>बहुमान । १० |

1. P. omits danda marks and reads धगम for धगमप.
2. According to H.
   P.—सागनीसा । सारीमधसा । सापरीध । गनीमसा । सरिगरीसा । गमपमगा । पधनीधपा । सानीधनिसा । धपमपधा । मगरिगमा । सामरीपगधमनी । पसामाप । नीम । धगपरीममा । इनि समुखः ॥ १८ ॥

| | |
|---|---|
| क्रमस्वरा जालिकावत् इति धातकः । ११ ⊙⊙⊙⊙⊙⊙⊙⊙ | व्युत्क्रमस्वरा विपरीत-जालिकावत् इति मलिनः । १२ ×××××××× |
| सारीगम पधनीसा वज्रवत् त्रिवलिवत् हुंकारः । १३ | सा री ग म प धनीसा शङ्खवद् द्विधा उधोतः १४ |
| सा री ग म प धनी सा नाडी सर्पवद् विधोतः । १५ | सा री ग म प ध नी सा महानाडीवत् सुबाहुः । १६ |
| सारीगमपधनीसा छत्रवत् प्रौढः । १७ | षडीस्वली सा सा री नी ग ध म प सन्मुखः । १८ |
| अष्टकोणं सा सा री नी ग ध म प विचित्रबन्धः । | |
| सा सा री नी ग ध म प कमलं । | सा री ग म प ध नी सा हारगुम्फ इत्यादयः एवं अलङ्कारा नानाविधा ज्ञेयाः । |

छत्रचक्रासिशङ्खाब्जजालीगोमूत्रिकादय ।
[1]स्युर्विचित्राणि चित्राणि बुद्धया कार्या तदाकृति ॥ १२६ ॥

[2]क्रमव्युत्क्रमविन्यासादन्योन्य स्वरयोगत ।
जायन्ते बहवो भेदास्तेऽस्मिन्नष्टादश[3] स्मृता ॥ १२७ ॥

एवमष्टादश प्रोक्ता अलङ्कारा स्वरानुगा ।
न्यस्ता अमी प्रबन्धस्थकरणे[4] स्वरपूर्वके ॥ १२८ ॥

पाटाना करणे चेयमेव[5] रीतिर्मता हिता ।
[6]अष्टवाद्योत्थपाटाना योगात्तत्स्वरवद्भवेत् ॥ १२९ ॥

अष्टौ ते भृतल( भुङ्गल )वशौ[7] वीणापट्टाउजो तथा ।
[8]मृदङ्गतवि( त्रिव )ली तालकांस्यतालो स्वभेदिनौ ॥ १३० ॥

इत्यलङ्कारस्वरकरणपाटकरणानां लक्षणम् ॥

स्वरकरणसुदक्ष पाटबन्धैकधुर्य
स्वरनियमितरागप्रौढभेदप्रवीण ।
सरसवचनगुम्फो गीतनिर्माणकृच्च
स हि भवति यशस्वी सर्वराजा सदस्सु ॥ १३१ ॥

इति श्रीमलधारि( गच्छमण्डन )श्रीराजशेखरसूरिशिष्यवाचनाचार्यश्रीसुधाकलशविरचिते स्वोपज्ञ-सङ्गीतोपनिषद्ग्रन्थसारोद्धारे गणस्वररागादिप्रकाशनो नाम तृतीयोऽध्याय ॥ ३ ॥ छ ॥

---

1 H & K —गवाक्षनाणि चित्राणि बुद्धया कार्या तदाकृति ॥
2 H & K —क्रमविक्रमावर्तनादन्योन्य०
3 P —०ष्टादशो स्मृता । H in margin आम्नन्—ग्रन्थ
4 H & K —प्रबन्धास्ते करणे
5 H & K —चैवमेव
6 H & K —अष्टवाद्यादिपाटाना
7. P —अष्टौ त भुगलावशौ H — अष्टौ ते०
8 P —मृदंगत्रिवलीतोल०

## चतुर्थोऽध्यायः ।

सरभसमिलिताना नाकलोकाङ्गनाना
'ततघनशु(सु)षिरास्यानद्धवाद्येश्च नृत्ये ।
'त्रिभुवनननताया सोऽयकृय स्वराण्या'
समवसरणभूमौ वीतरागो मुदे स ॥ १ ॥

अथ वाद्यानि कथ्यन्ते 'बन्धा वर्णाश्च तद्भवा ।
वाद्यानीह चतुधा[5] स्युस्तज्ज्ञा वर्णास्त्वनेकधा ॥ २ ॥

तत वीणादिक वाद्य तालप्रभृतिक घन ।
वशादिक तु शु(सु)षिरमानद्ध मुरजादिकम् ॥ ३ ॥

केचिद्‌दुस्त्रिधा वाद्यमङ्क्यालिङ्ग्यूर्ध्वग त्विति ।
पुष्कापुटतालगात्रयन्त्राणीति तु पञ्चधा ॥ ४ ॥

---

1 P —ततघनसुषिरानद्ध०

2 H —त्रिभुवनवनिताया

3 H —सुवाण्या

4 P —बन्धाद्वर्णाश्च

5 Cf —

पञ्चधा च चतुर्धा च त्रिविध च मत मते ।
बाहुल्यस्य मत स्यात पञ्चधा वाद्यमेव च ॥
सुषिर च घन चैव चमनद्ध तथैव च ।
तन्त्रीगात पुरा स्यात पञ्चधा वाद्यलक्षणम् ॥

चतुर्विध दत्तिलेन—

*आनद्ध ततमत स्यात् घन च सुषिर तथा ।*
एवं चतुर्विध वाद्य दत्तिलेन प्रकीर्तितम् ॥

नारदमते तु चामण तान्तक चैव घन च त्रिविध मत्म् ।
एव त्रिधा नारदस्य मत वाद्यस्य लक्षणम् ॥

(?) quoted in *Bharatakośa* p 599
According to Bharata *vādya* is fourfold

आहतोऽनाहतश्चैव दण्डाहतकराहतो ।
वाताहतश्चेत्यथवा पञ्चशब्दा[1] उदीरिता ॥ ५ ॥

तते वीणादिके वीणा पिनाकीकिन्नरीमुखा ।
पिनाकी सधनुस्तुम्बा किन्नर्यो द्वित्रितुम्बिका ॥ ६ ॥

वीणास्तु [2]देववीणाद्यास्तास्त्विमा नादपूरिता ।
शिवस्य [3]वीणानाम्नी सरस्वत्यास्तु कच्छपी ॥ ७ ॥

विश्वावसोस्तु बृहती महती नारदस्य च[4] ।
कलावती तुम्बरोस्तु गणाना च प्रभावती ॥ ८ ॥

तथा घोषवती वीणा विपञ्ची कण्ठकूणिका ।
वल्लकी ब्रह्मवीणेति वीणाभेदास्त्वनेकश ॥ ९ ॥

वीणास्त्वेकतन्त्र्याद्यास्तन्त्रीसङ्ख्याङ्किताभिधा ।
एकविंशतितन्त्र्यन्ता मानव्यो देवता अपि ॥ १० ॥

एकतन्त्री द्वितन्त्री च त्रितन्त्री सप्ततन्त्रिका ।
एकविंशतितन्त्री चेत्युत्तमा मध्यमापरा ॥ ११ ॥

भजते सर्ववीणासु [5]सैकतन्त्री प्रधानताम् ।
ब्रह्महत्या हरत्येषा दर्शनात् स्पर्शनादपि ॥ १२ ॥

दण्ड शिव शिवा तन्त्री नाभिभूताभिरुच्यते ।
तुम्ब विष्णु करा ब्राह्मी वासुकिर्दोरकस्मृत ॥ १३ ॥

---

1 Cf --अनाहत आहतश्चेति स नादो द्विविधो मत ।

× × × ×

सोऽप्याहत पञ्चविधो नादस्तु परिकीर्तित ।
नखवायुजचर्मण्यलोहशारीरजास्तथा ॥ ७ ॥

—सङ्गीतमकरन्द, १ ४ ७, पृ १ २

2 P —देववाद्यास्त्वास्त्विमा *Bharatakosa*, p 629 reads—वीणासु देववीणाद्या विज्ञेया नादपूरिता । For different lists of वीणाs see Bharata kosa, pp 628 29

3 P —वीण नाम्नी वीणाऽनाम्नी acc. to *Bharatakosa*, p 629

4 P —तु    5 P —चैकतन्त्री प्रधानताम् ।

स्वरान्ग्रामान्मूर्छनाश्च तानान्सिथुनीमनथा ।
मसाध्य तस्या रागांस्तु सर्वे वाद्या( ) सुबुद्धिभि ॥ १४ ॥

स्वरसाधनसस्थाननिम्दुमस्तकदण्डया ।
वीणया निर्मिताभ्यासो नाद शुद्धिकर पर[1] ॥ १५ ॥

गुरूपदेशादन्येऽपि भेदा वाद्याश्च नैतुकान् ।
सक्षेपान्नाममात्रेण वक्ष्ये भेदांस्तु कत्यपि ॥ १६ ॥

[2]कत्रवाडो [3]वृटवाडञ्छन्दो धारा च [4]नेटुदी ।
[5]वक्कारो हाफ हुपेति तिरिपो[6] वहणिर्वलि[7] ॥ १७ ॥

वयणि कोमलिम्नीपिश्चोपिर्भरितपूरितौ ।
[8]ओहर [9]प्रसरस्त्राण प्राणाद्या[10] वैणिका मता ॥ १८ ॥

घात पातश्च सलेम्वो लेम्बोलेम्बा च लेम्बका ।
घोघोऽ[11]ढंकरी रेफो भेदा एव घना मता ॥ १९ ॥

आलप्तयोऽप्यथ ज्ञेया व्यक्ताव्यक्तात्मराकुरा ।
परकाउद्देशगाउ( ) शुद्धा सालकृता तथा ॥ २० ॥

---

Also see *Vinal ksana and Vinaprapathaka* (G O S No 131) for वीणाs

1 P omits this verse

2 H & K —कत्तवाडो *Bharatakośa* (quoting our vv 17-18, under वीणाप्राणा, on p 628)—कत्तवाड P —कत्तवाडा

3 P —वोटवार *Bharatakośa*,—वृटवाड

4 P —वेकुत्री H —वैकुत्री *Bharatakośa*—वौङुत्री

5 H & K —वक्काले हाँप P —वक्कालें हा(प) *Bharatakośa*—वक्कारो होफ्युपेति

6 H & K —तरिपा P —तिरिपा *Bharatakośa*—तिरपो

7 P —चहणिर्बलि H & K —वहणिबलि *Bharatakośa*—वहणिवलि .

8 H & K —आहर P —उहर (or आहर indistinct) Bharatakośa—हुहर

9 P H & K प्रसर *Bharatakośa*—प्रहर

10 P —प्राद्या 11 H —,घोडंकरी.

वाद्यानि सुषिरे चाथ वंशशङ्खश्च भुङ्गला ।
भेरी शृङ्ग वसुली च मुख्यवाद्यान्यनेकश ॥ २९ ॥[1]

वैणव खादिरो वान्तश्चान्दनो रक्तचन्दन[2] ।
आयस काम्यकमारो भवेद्दण्डश्च हैमन ॥ ३० ॥

खादिरो वर्तुल श्लक्ष्णो ग्रन्थिभेदव्रणोज्झित ।
कनिष्ठाङ्गुलिनिस्तार [3]गर्भेऽस्य सुषिर मतम् ॥ ३१ ॥

त्यक्त्वा च तत्र दण्डे त्रीण्यङ्गुलानि शिर स्थलात् ।
मुक्तास्यता(क्त्वा पुनः)त्सुषिरं कार्यमङ्गुलिसम्मितम् ॥ ३२ ॥

द्विहस्ताङ्गुलिवाद्यानि दण्डप्रान्ते द्वितीयके ।
एकाङ्गुलान्तराणि स्युश्छिद्राण्यन्यानि सप्त च ॥ ३३ ॥

[4]तान्यधो बदरीबीजमहन्ति भवन्ति हि ।
नादहेतोर्मारुतस्य निर्गमाय कृतानि तु ॥ ३४ ॥

भवन्ति मुखरन्ध्रस्य तारन्ध्रस्य चान्तरे ।
[5]एकैकाङ्गुलिवृद्धा स्युर्वंशाश्च द्वादश क्रमात् ॥ ३५ ॥

[6]द्वात्रिंशत्यङ्गुलमित वंश यावद्भवन्त्यमी ।
अविस्पष्टश्रुतित्वाच्चे वंशा नोक्तास्तु नीरसा ॥ ३६ ॥

---

1 For सुषिरवाद्य according to various texts, see, *Bharatakośa*, p 734

2 P —रक्तचन्दन For वंश and its varieties according to Kumbha and others see, *Bharatakośa*, pp 576 77, pp 934 ff

3 P omits from here upto v 32[d] and कार्यमङ्गुलिसम्मितम् is read in 31[d] in P

4 P —तान्यधो बदरीबीज॰ H & K —तानि बदरीबीज॰

5 H & K —एकैकाङ्गुलिवृद्धा P —एकैकाङ्गुलवृद्धा

6 Acc to Someśvara (quoted in *Bharatakośa*, p 577) the maximum length is 18 angulas

जयो नवाङ्गुलो ज्ञेयो विजयो द्वादशाङ्गुल ।
त्रयोदशाङ्गुलो नन्दो महानन्दश्चतुर्दश ॥ ३७ ॥

अमी [1]प्रशस्ताश्चत्वार सरन्ध्रा सरसा इति ।
फुत्काश्चतस्र एतेषा तासा सज्ञा( ) क्रमादम् [2] ॥ ३८ ॥

इरला निरला चैव पोरा प्रौढा च नामत ।
इरला सूक्ष्मनादा स्याद्विरला ज्योतिरन्विता[3] ॥ ३९ ॥

पोरा तु काहलानादा प्रौढा रङ्गविनाशिनी ।
घनत्व [4]सुस्वरत्व च पूरत्व फुत्कृतेर्गुणा ॥ ४० ॥

इति सुषिरे वंशलक्षणम् ॥

अमय शङ्खमुत्तानमाभिक[5] सागरोद्भवम् ।
एकाङ्गुल तस्य मुखे रन्ध्र शब्दस्य[6] कारकम् ॥ ४१ ॥

इति शङ्खलक्षणम् ॥

भुङ्गला ताम्रघटिता गोपुच्छाकारधारिणी ।
प्रलम्बबाहुदण्डाङ्गी[7] वाद्या मङ्गलकर्मसु ॥ ४२ ॥

इति भुङ्गलालक्षणम् ॥

नृपवाद्य भवेद्भेरी भद्रा कालनिवेदिनी ।
धत्तूरकुसुमाकाराऽखण्डा प्रौढनिनादिनी ॥ ४३ ॥

इति भेरीलक्षणम् ॥[8]

महिषशृङ्गज शृङ्ग वक्राकार च[9] तत्तनु ।

---

1 P—प्रशस्या०  2 P—क्रमादथ
3 P—ज्योतिरन्विता  H & K—ज्योतिराङ्कता
4 H & K—सुस्वर च
5 H & K—शंखमुत्तानं मुनाभि  For remarks of Somesvara Kumbha and Nanya on Sankha see *Bharatakosa* p 654
6 H & K—शब्दस्य
7 H & K—बाहुदण्डांगी  भुङ्गला is भूंगळ in Gujarati
8 For भेरी, see also, *Bharatakosa*, p 443 and p 902
9 P—वक्राकार घनतनु ।  H—वक्राकार च तत्तनु ।

श्याम सूक्ष्माग्रवदन गोपनाद्य तुरुत्स्वरम् ॥ ४४ ॥

इति शृङ्गलक्षणम् ।

वंशवद्वमुली ज्ञेया वशखण्डा[1] समाङ्गभृत् ।
गोपप्रियानेकविधा वाद्या [2]साऽऽहितृतामपि ॥ ४५ ॥

इति वंसुलीलक्षणम् ।

काहला श्वापच वाद्य तुरीय तु नाधगम् ।
रणवाद्य मधुकरी [3]चान्यत्न सुपिर विदु ॥ ४६ ॥

इति सुपिरवाद्यलक्षणम् ।

[4]सुरजादिपदानद्ध [5]तद्वाद्यमथ वच्म्यह ।
[6]मृदङ्गढक्कानिस्साण त्रिवलीपटहादिकम् ॥ ४७ ॥

[7]मुरजस्तु मते जैने जात शङ्खान्महानिधे ।
लोके तु स्वयमीशेन स वाद्यो मुरज कृत ॥ ४८ ॥

कथ रुद्रेण तद्वाद्य मुरजाख्य विनिर्मित ।
कथ पादभवा वर्णा स्वस्वासत्सिँश्च वन्धिनि ॥ ४९ ॥

[8]कैलासाद्रौ स्थित रुद्रमन्यदा ध्यानतत्परम् ।
ज्ञात्वा स्वघातकमिति तत्रागान्मुरनासुर ॥ ५० ॥

प्राप्तनक्षत्र मा तु न हन्तु कोऽप्यल पर[9] ।
ऋते हराचपोयुक्तादतस्त पातयाम्यन ॥ ५१ ॥

---

1 P —वशसडसमागभृत् । H —वशदड्डा
2 P —साहिजनामपि ॥ ४५ ॥ इति वसुलक्षणम् ।
3 P —मधुकरीत्यस्यत　　4 H.—मरजादि०
5 P —तद्वाद्यमवच्म्यह ।
6 H —मृदङ्गढक्कानि स्थानत्रिवलीपटहादिकम् ॥
P —मृदङ्गढक्कान स्वार्णत्रिवलीपटहादिकम् ॥
7 H —मदजस्तु　　8 H —कैलाशाद्रौ
9 P —काऽप्यत्र पुर ।

विमृश्यैवं तपोविघ्नरूपं निर्मापयन्मयुं[1] ।
तत्र कैलासशिखरे वने बहुतरौ च सः ॥ ५२ ॥

ध्यानं विसृज्य रुद्रोऽपि पश्यति स्म तपोवनम् ।
तपोलोपि च तज्ज्ञात्वा तत्कृतं ज्ञानचक्षुषा ॥ ५३ ॥

तपोलोपिनि तस्मिंस्तु कुपितो निर्ययौ ततः ।
रुद्रो रुद्रमनास्तं च दृष्ट्वा प्रोवाच राक्षसम् ॥ ५४ ॥

तपोभङ्गोद्यमं कृत्वा रे रे रक्ष क यास्यतः ।
गजचित्युक्त एवायं युयुत्सुर्दूरमापतन् ॥ ५५ ॥

[2]स चिरं योधयित्वा तं पशुमारममारयत् ।
पशुपाण्यंद्रि(ण्यङ्घ्रि)हीनं तद्देहं कृत्वात्यजद्भुवि ॥ ५६ ॥

शिवे स्वस्थानमायाते सार्द्रं तद्देहपञ्जरम् ।
उत्पाट्य मांसलोभेन गृध्रैर्नीतं नभस्तले ॥ ५७ ॥

मांसं तत्पञ्जरस्थं तैः किञ्चिद्भुक्त्वाऽतिभारतः ।
[3]पातिते स्वमुखेभ्यस्तत्सान्त्रं[4] वृक्षोपरि स्थितम् ॥ ५८ ॥

अन्त्रावलीभिः संलग्नं तरुशाखावलम्बि तत्[5] ।
सूर्यातपेन [6]संशुष्कं चर्मनद्धं मुखद्वये[7] ॥ ५९ ॥

निर्मांसत्वात्तदन्तस्तु सुषिरं वायुयोगत ।
शब्दायमानं [8]श्रीकण्ठः सु(शु)श्राव तथ वने[9] भ्रमन् ॥ ६० ॥

तच्छब्दितं समाकर्ण्य श्रुतिसौख्यकरं परं ।
कौतुकात्तत्र सर्वेशस्तं ददर्श तथा स्थितम् ॥ ६१ ॥

किमेतदिति तद्रूपं पश्यन्सम्यक् तं शिवः ।
विचिन्त्य स्वहृतं पूर्वं वामहस्तेन चाग्रहीत् ॥ ६२ ॥

1. P.—मयुं।
2. H.—सुचिरं योधयित्वा
3. P.—पतिते.
4. H.—तं यन्त्रं.
5. P.—तस्मात्तस्मिन्नन्त्रं।
6. P.—संशुष्कं.
7. P.—मुखद्वये ।
8. P.—श्रीकण्ठ.
9. P.—वने.

विशेषशब्द उत्पेदे ता इत्यस्मिन्सनादके[1] ।
कौतुकाद्दक्षिणेनापि करेण प्रहृत तत[2] ॥ ६३ ॥

उत्पन्नो धीत्यय शब्दस्त जघान पुन शिर ।
करेण वामेन परो जजृम्भे [3]थॉं इति स्फुटम् ॥ ६४ ॥

दक्षिणेन करेणापि मुरजाच्च पुनर्हतात् ।
जज्ञे द्रेमित्यय शब्द स चाथ[4] स्वाश्रय ययो ॥ ६५ ॥

कियत्यपि गते काले [5]प्रावृडर्त्तो( ड्डतो ) समेऽन्तरि[6] ।
विजह्र शम्भुरुमया नगोटजकृते तदा ॥ ६६ ॥

[7]पलाशसर्ग( र्ज )पत्राणा शाड्वलाना निवेशनात् ।
गणेभ्य कारयामास [8]शर्वस्तत्रोटज नवम् ॥ ६७ ॥

एकदोटजपत्रेषु शुष्केषु परिपातितान् ।
नवाब्देनाम्बुबिन्दूंस्तु[9] शुश्रावोमायुतो हर ॥ ६८ ॥

उक्त च शिवया स्वामिन्पत्रेष्वासारयोगत ।
सञ्जाता यादृशा शब्दास्तादृशान्स्थापय क्वचित् ॥ ६९ ॥[10]

इत्युक्ते विमृशन्नीश स्मृत्वा मुरजमोमिति ।
ऊचे च[11] पूर्ववृत्तान्त तच्छब्दास्तत्र च न्यधात् ॥ ७० ॥

ते शब्दा कीदृशास्तत्र कथ न्यस्तास्तु मर्दले[12] ।
तत्प्रसङ्गेन तत्पाणौ[13] उत्पन्ना कीदृशास्त्विति ॥ ७१ ॥

---

1 P —ते इत्यस्मिन्सनादके  2 P —प्रहृतात्तत ।

3 P —धा

4 H —चाप्य Cf पुरा सुरासुर भित्त्वा भगवान्दैत्यामृत ।
तत्कलेवरमादाय मदर्[?] कृतवान्भुव ॥ etc from चित्र quoted in *Bharatakosa*, P 499

5. H —प्राविड्तो  6 P —समनरि

7 P —पलाशसम॰  8 H —सर्व॰

9 H —स्तत

10 P omits this verse  11 H —ऊचेव

12 H —मद्ले  13 P — पाण्योस्त्वभा

तद्यथा—

[1]तक्ड दरगड । धिन(क)ड दरगड । ताधिक्ड । दाधिक्ड । दरगड ।
धिद्धिकड । तातक्ड । दरगड । तक्ड । दाधिक्ड । दरगड ।
धिक्ड । दरगड । दरगड । ताधिथ(त्थ)उ द्रै ।

शुष्कपत्रोद्भवा पूर्वमुत्पन्ना मुरजेऽपि ते ।
उक्ता शब्दा पञ्चत्रिंशदथ पाटा करोद्भवा[2] ॥ ७२ ॥

नागबन्ध स्वस्तिकश्च शुद्धाख्य स्यादलमक[3] ।
समखली (समस्खली) चेति पञ्च मुख्या पाटा प्रकीर्तिता ॥ ७३ ॥

प्रत्येक [4]पञ्च सप्तेते पञ्चत्रिंशद्भवन्त्यत ।
नागबन्धश्च पणव एका एकमरा तथा ॥ ७४ ॥

[5]दूसारा चेव सञ्चारो विचारो नागबन्धगा ।
अथ सप्त स्वस्तिकाद्या स्वस्तिरो वल्किोहल ॥ ७५ ॥

फुल्लविक्षेपकश्चैव चारश्च निनिषण्णक[6] ।
खण्डनागश्च निश्वास शुद्धाद्य सप्तक स्तथ[7] ॥ ७६ ॥

[8]शुद्ध स्यात्स्वरस्फुरणा[9] उत्फुल्ला[10] सुप्रियो दम ।
नगारो मानवल्ली स्यादमी थाल्मकसप्तकम्[11] ॥ ७७ ॥

अल्मक शुद्धरूपो विश्रामो[12] विषमाखली (विषमस्खली)[13] ।
आनन्द शुचिस्फुरणा समखल्यादिक तत ॥ ७८ ॥

---

1 P reads—
तक्ड दरगड । धिक्ड दरगड ताधिक्ड दाधिक्ड दरगड धिद्धिक्ड
दातक्ड दरगड तक्ड दाधिक्ड दरगड₂ दरगड₆ ताथिथो उद्र

2 H—पाटकरोद्भवा ॥

3 H—शुद्ध स्यादवऽल्मक ।    4 P—सप्त

5 P—दूसरा    6 P—विनिपिण्णिक

7. H—स्था    8. H—शुद्ध.

9 P—.स्फुरण    10. P—उच्छुग.

11 H—स्यादमी ल्मकसप्तकम् ।    12 H—विश्रामा

13 P.—विषमा( ? ) खली

| | |
|---|---|
| ननगिड । गिड्दगि ॥ | पणव[1] ॥ २ ॥ |
| ग्डिदि ग्डिदि ॥ | एका ॥ ॥ ३ ॥ |
| ननग्डिदि ॥ | एकसरा[2] ॥ ४ ॥ |
| नखु नखु ॥ | दूसरा ॥ ५ ॥ |
| [3]ख च ट ग्टि ॥ | सचार ॥ ६ ॥ |
| [4]धिक्ट धिकट ॥ | त्रिचार ॥ ७ ॥ १ ॥ |
| थों गि ॥ | स्वास्तिक[5] ॥ १ ॥ |
| [6]थों हंत ॥ | वलिकोहल ॥ २ ॥ |
| [7]थों गिणि । थों थों गि ॥ | पुल्लविक्षेप ॥ ३ ॥ |
| [8]धुदि गण ॥ | चार ॥ ४ ॥ |
| क्रिट थों ॥ | विनिषि(ष)ण्णक[9] ॥ ५ ॥ |
| थों गि खें खें[10] ॥ | खण्डनाग ॥ ६ ॥ |
| धिरकट थों[11] ॥ | विश्वास ॥ ७ ॥ २ ॥ |
| [12]नहि खहिं गि ॥ | शुद्ध ॥ १ ॥ |
| ननगि खहि ॥ | स्वरस्फुरण ॥ २ ॥ |
| ननगि नखहि नखहि[13] ॥ | उच्छला ॥ ३ ॥ |
| ग्डिदि ग्डिदि खहि ॥ | सुप्रिय[14] ॥ ४ ॥ |
| थोंगि खहि[15] ॥ | दम ॥ ५ ॥ |

---

1 पवन acc to म० रत्ना० *op cit* p 400

2 H —एगसिरी  एक्सर, द् सर etc in स० रत्ना०, p 400

3 H —ख च न हि ट ॥  4 P —िधक धिकट ॥

5 H —था गि ॥ सस्तिक ॥  6 P —थौन हत ॥ वल्किोहर ॥

7. P — थों गिण०  8 H — धुदि । गणचार । P धुदि गण चार ।

9 H — विनिखिन्नक ।  10 P — था गि खे ख ।

11. P —धिर कट था ।  12 H —र्नाहि खहिं ग ।

13 P —ननाग नखरिं खाहि ।  14 H — सुाप्रया ॥

15 H —थोगि खहिं ।

पार्श्वे नम्रं नता द्वाविर्यत्र हस्तौ च रेचितौ ।
उत्प्लुत्योत्प्लुत्य गमनमुन्मत्तं करणं तु तत् ॥ १८ ॥

यत्र वामेतर पादौ दक्षिणाय स्थितौ च तौ ।
स्वस्तिकाकारतां यातौ स्वस्तिकं करणं तु तत् ॥ १९ ॥

व्यावृत्तपरिवर्तितौ हस्तौ तौ पृष्ठे स्वस्तिकाकृती ।
पादौ च स्वस्तिकाकारौ यत्र तत् पृष्ठस्वस्तिकम् ॥ २० ॥

हस्तौ च चरणौ यत्र स्वस्तिकाकारधारिणौ ।
वामांह्रि स्वस्तिकाकारगमनञ्च दिक्स्वस्तिकं मतम् ॥ २१ ॥

रेचितं चरणं कृत्वा स्पर्शजानुपरं पदं ।
दक्षिणं स्वस्तिकं हस्तं यत्र तत्स्वोर्ध्वरेचितम् ॥ २२ ॥

पादौ निकुञ्चितौ यत्र हस्तौ वक्ष-कटीगतौ ।
दक्षिणे सन्नतं 'पार्श्वे[1] मुखं च तत्कटीसमम्'[2] ॥ २३ ॥

आक्षिप्य रेचितो वामो हस्तः पादस्तु दक्षिणः ।
[3]'आक्षिप्य रेचितो वक्रो भवेदाक्षिप्तरेचिते'[4] ॥ २४ ॥

[5]विक्षिप्तौ तु करौ पादौ तथाक्षिप्तौ करौ पदौ ।
यत्र स्यातां क्रमादेवं विक्षिप्ताक्षिप्तकं[6] च तत् ॥ २५ ॥

दक्षिणः करिहस्तः स्यात् शुकतुण्डाभिधः परः ।
कटिछि(च्छि)न्ना भवेत् किञ्चिदत्रार्द्धस्वस्तिकं[7] तु तत् ॥ २६ ॥

करिहस्तस्तु यो हस्तो व्यावृत्तपरिवर्त्तितः ।
शेषं पूर्वानुगं लक्ष्म यत्र स्यादञ्चितं[8] तु तत् ॥ २७ ॥

खटिकावदनं वामं विधायोद्धृत्य कुञ्चितं ।
दक्षिणोऽधोमुखो हस्तो भुजङ्गत्रासितं[9] तदा ॥ २८ ॥

---

1. P.—पार्श्व
2. No. 19 in Bharata, cf स्वस्तिकापसृत पादः करौ नाभिकटिस्थितौ ॥ ७९ ॥ पार्श्वमुद्वाहितं चैव करणं तत्कटीसमम् । *NS* 4 79-80, pp. 105-106, *Bharatakośa*, p 101 quoting Asoka, *Saṅgīta ra*, 7. 610-612
3. H —आक्षिप्तरेचितौ चक्रौ
4. No 20 of Bharata, cf हस्तौ हृदि भवेद्वाम सव्यश्चाक्षिप्तरेचितः ॥ ८० ॥ रेचितश्चापविद्धश्च तस्यादाक्षिप्तरेचितम् *NS* 4 80-81, pp 106-107, *Bharatakośa*, p 47, *Saṅgīta ra*, 7 583-85
5. H —आक्षिप्तौ तु करौ पादौ तथाक्षिप्तौ च विक्षिप्तौ ।
6. No 21 of Bharata, cf विक्षिप्तं हस्तपादं च तस्यैवाक्षेपणं पुनः ॥ ८१ ॥ यत्र तत्करणं ज्ञेयं विक्षिप्ताक्षिप्तकं द्विजाः । *NS*. 4 81-82, p 107, *Bharatakośa*, p 604 quoting Jyāṣṭana, Aśoka and Vema, *Saṅgītaratnākara*, 7 616-621
7. No 22 of Bharata, cf स्वस्तिकौ चरणौ कृत्वा करिहस्तं च दक्षिणम् ॥ ८२ ॥ वक्षःस्थाने तथा वाममर्धस्वस्तिकमादिशत् । *NS* 4 82 83, pp 107 108, *Bharatakośa*, p 32 *Saṅgītaratnākara*, 7 585-586
8. No 23 of Bharata, cf व्यावृत्तपरिवृत्तस्तु स एव तु करो यदा ॥ ८३ ॥ अञ्चितो नासिकाग्रे तु तदञ्चितमुदाहृतम् । *NS* 4 83 84, p 108, *Bharatakośa*, p 8, *Saṅgītaratnākara*, 7 594 595
9. No 24 of Bharata, cf कुञ्चितं पादमुत्क्षिप्य त्र्यश्रमूरुं विवर्तयेत् ॥ ८४ ॥

आकुञ्च्य दक्षिणं पाद वामोऽग्रे ध्रियते नतः[1] ।
व्यावृत्यावर्तितौ हस्तावृर्ध्वजानु[2] तदा भवेत् ॥ २९ ॥

कर्त्तरीवदनौ हस्तौ पादौ किञ्चिन्निकुञ्चितौ ।
कटी नम्रा भवेद्यत्र करणं तन्निकुञ्चितम्[3] ॥ ३० ॥

घूर्णयन्तौ पदौ[4] यत्र तथान्योन्यप्रसारितौ[5] ।
व्यावृत्यावर्त्तितौ हस्तौ करणं तच्च बृंहितम्[6] ॥ ३१ ॥

श्लिष्टपार्ष्णी पदौ यत्र वामो हस्तश्च[7] रेचित ।
[8]क्रमेणावर्त्यते सोऽपि तद्भवेद् वक्त्रमरेचितम्[9] ॥ ३२ ॥

रेचितो दक्षिणो हस्तो दक्षिणोऽङ्हि(णोऽङ्घ्रि)र्निकुट्टित ।
दोलापवर्तितौ[10] हस्तौ तद् रेचितनिकुट्टितम्[11] ॥ ३३ ॥

---

कटिजानुविवर्तश्च भुजङ्गत्रासितं भवेत् । AS, 4.84-85, pp 108-109, *Sangītaratnākara*, 7.613-614, *Bharatakośa*, p. 441.

1. H.—तन ।
2. No. 25 of Bharata, cf. कुञ्चितं पादमुत्क्षिप्य जानुस्तनसमं न्यसेत् ॥ ८५ ॥ प्रयोगवशगौ हस्तौ ऊर्ध्वजानु प्रकीर्तितम् । AS. 4.85-86, *Bharatakośa*, p 87, *Sangītaratnākara*, 7.526-527.
3. No 26 of Bharata, cf. [illegible] ॥ ८६ ॥ [illegible] । AS. 4. 86-87, p 109 *Sangīta ra.*, 7. 621-23, *Bharatakośa*, p. 330.
4 P. omits पदौ. 5. P —तथान्योन्यप्रसारितौ ॥
6. Bṛṃhitam is not known to Bharata and others, but cf. No. 27 of Bharata, [illegible] ॥ ८७ ॥ [illegible] । AS, 4. 87-88, pp 109-110; for matta also see, *Sangīta ra.*, 7 630-631, *Bharatakośa* p 457.
7. H —हस्तश्च. 8 H —क्रमेण [illegible]
9. Not known to Bharata & others, but cf no. 28 of Bharata, [illegible] ॥ ८८ ॥ [illegible] । AS 4. 88-89, pp 109-110 for *ardhamattali*, also see *Sangīta ra.* 7. 631-632 *Bharatakośa* p 31
10. H —दोलापवर्तितौ.
11. No 29 of Bharata cf [illegible] ॥ ८९ ॥ [illegible] । AS. 4 89-90, p. 110, *Bharatakośa*, p 550 *Sangīta ra.*, 7 633

नर्त्तनिवदना हस्ता नाभिदेशे च संस्थितौ ।
[1]शू(सू)चीविद्धावपक्रान्तावङ्घ्री(वङ्घ्री) पादापविद्धके[2] ॥ ३४ ॥

वदनं [3]ललितं यत्र त्रिकं च वलितं तथा ।
शू(सू)चीमुखौ भवेद् हस्तौ यत्र तद् वलितं [4]मतम् ॥ ३५ ॥

घूर्णितौ रचितौ हस्तौ घूर्णितं च तथा शिरः ।
घूर्णयन्तौ पदौ यत्र नर्त्तौ तद् घूर्णितं[5] मतम् ॥ ३६ ॥

यत्र [6]विनतौ हस्तौ वामस्तु गतिकामुखः ।
सर्वाङ्ग ललितं यत्र तत्स्थ ललितं[7] तु तत् ॥ ३७ ॥

ऊर्ध्वजानु [8]पुरः कृत्वा न्यसेत् [9]तत्र लतापरः ।
त्रिचित्तसे[10] निर्तीयाहा(याङ्घ्री) [11]दण्डपक्षाभिधं तु तत् ॥ ३८ ॥

---

1 P —शूचावद्वापावद्वौ नावहा

2 Cf No 30 of Bharata नार्यौ नाभीन्थे हस्तौ प्राङ्मुखौ गरुडामुखौ ॥ १० ॥ सूचीविद्धावपक्रान्तौ पादौ पादापविद्धक । NS 4 90-91, pp 110 111, *Bharatakośa* p 365, *Sangītaratnākara* 7 638 39

3 P —वाल्न

4 No 31 of Bharata, cf अरालौ भरद्वम सूचीपादस्तथैव च ॥ ११ ॥ ? ॥ त्रिक विन्यस्त च वालन नाम तद्भवेत् । NS 4 91 2 p 111 *Bharatakośa*, p 590 *Saṅgītaratnākara*, 7 635 36

5 No 32 of Bharata cf NS 4 92 93 p 111 *Saṅgītaratnākara* 7 624 625 *Bharatakośa* p 193

6 P —विसनितौ   H —नवनिता

7 No 33 of Bharata, cf ... NS 4 93 94 pp 111 112 *Bharatakośa* pp 567 68 *Saṅgītaratnākara* 7 634

8 P —पुरा   9 H —तत्रस्थितत्

10 H —त्रिचित्तसा

भुजङ्गत्रासितं कृत्वा वामपार्श्वस्थितौ करौ ।
रेचितौ वाततोद्वृत्तौ भुजङ्गत्रस्तरेचिते ॥ ३९ ॥

कम्पितश्च नता ग्रीवा भवेद्धस्तो लताभिधः ।
नितं च [3]वलितं पादौ नूपुरौ[4] नूपुराभिधे[5] ॥ ४० ॥

अरालौ रेचितौ हस्तौ व्यावृत्तौ[6] परिवर्तितौ ।
वक्षाश्च स्थानकं यत्र तत् स्याद्वैशाखरेचितम् ॥ ४१ ॥

रेचितोद्वर्तितौ हस्तौ[8] वामस्तु वलिता कटी ।
पादौ च स्वस्तिकौ यत्र तद्भवेद्भ्रमराभिधम्[9] ॥ ४२ ॥

नाभीदेशे करौ यत्राञ्चितश्च गण्डिकामुखं ।
यावृत्य स्थानमानीता कटिस्तच्चतुराह्वयम्[10] ॥ ४३ ॥

1 No 35 of Bharata cf भुजङ्गत्रासितं कृत्वा यत्रोभावपि रेचितौ ॥ ९५ ॥ वामपार्श्वस्थितौ हस्तौ भुजङ्गत्रस्तरेचितम् । NS 4 95 96 p 112 *Bharatal* ... p 440 *Sangitaratnakara* 7 644

2 P —भवेद्धस्तो लताभिधः । 3 H —वलितौ

4 P —नूपुरौ

5 H —नूपुराभिधे ॥ No 36 of Bharata cf *नितं मण्डलं कृत्वा* ... रेचितौ कर्णौ ॥ ९६ ॥ नूपुरं तथा पादं करणं नूपुरं स्मृतम् । NS 4 96 97 pp 112 113 *Bharatakosa* p 340 *Sangitaratnakara* 7 639 40

6 H —व्यावृत्तौ

7 No 37 of Bharata cf रेचितौ हस्तपादौ च कटी ग्रीवा च रेचिता ॥ ९७ ॥ वैशाखस्थानकेनैतद्भवेद्वैशाखरेचितम् । NS 4 97 98 p 113 *Bharatakosa* p 645 *Sangitaratnakara* 7 657 658

8 H —रेचितोद्वर्तितौ हस्तौ

9 Cf No 38 of Bharata, ... ॥ ९८ ॥ ... NS 4 98 99 *Bharatakosa* p 44- *Sangitaratnakara*, 7 641 642

10 Cf No 39 of Bharata अञ्चितः स्याद्वामहस्तः ... ॥ ९९ ॥ दक्षिणः कुट्टितः पादश्चतुरं तत्प्रकीर्तितम् । NS 4 99 100 pp 113 114, *Bharatakosa*, p 196 *Sangitaratnakara*, 7 648-49

वामो रत्नास्रो यत्र नितम्बे ञ्चित पर ।
भुजङ्गत्रासिते न्यामो भुजङ्गाञ्चितकं[2] हि तत् ॥ ४४ ॥

[3]दण्डवद्रेचिते यत्र हस्तपादौ च तूर्णगा ।
द्वितीयो मरला स्याता तद्भवेद् दण्डरेचितम्[4] ॥ ४५ ॥

दक्षिणो वृश्चिक[5] पाद स्वभावस्थ पर पद ।
निकु(कु)ट्टितो करा यत्र तद् वृश्चिकनिकुट्टितम्[6] ॥ ४६ ॥

निकुट्टिता यत्र पदो हस्तो चैव रताभिधो ।
कटिर्भ्रमणशीला च तदुक्त कटिरेचितम्[8] ॥ ४७ ॥

वामो हस्तस्तथा पादो[9] वृश्चिकाकारधारिणा ।
दक्षिण स्याल्लताहस्तस्तद्[10] लतावृश्चिकं[11] तदा ॥ ४८ ॥

---

1 H —नितम्ब ञ्चित पर

2 No 40 of Bharata, cf भुजङ्गत्रासित पाद ... रेचित कर ॥ १० ॥ रत्नाग्रस्थ करो वामो भुजङ्गाञ्चितक मेव । NS 4 100 101 Bharatakosa p 441, Sangitaratnakara 7 645 646

3 P —दण्डवद्रेचित यत्र हस्तपादौऽाय चा वेगौ ।

4 No 41 of Bharata cf NS 4 101 102, pp 114-115, Bharatakosa, p 267 Sangitaratnakara, 7 646 647

5 H reads वृश्चक everywhere for वृश्चिक

6 Called Vrscikakuttitam by Bharata, cf No 42 of NS 4 102-103, p 115, Sangitaratnakara, 7 660-661, Bharatakosa, p 634

7 P —निकुट्टैर

8 cf Katibhranta no 43 of Bharata सूचा वृत्तविद्ध च ... करण ... ॥ १०३ ॥ रेचिता च कटिर्यत्र कटिभ्रान्त तदुच्यते । NS 4 103 104, pp 115-116 Sangitaratnakara 7 649 652 Bharatakosa, p 101

9. H —पादौ वृश्चिकाकारणौ यत्र ।

10 P omits तद्

11 cf no 44 of Bharata अञ्चित ... पाद ... कुञ्चितावर्तितायुतौ ॥ १०४ ॥ ... कर वामस्तत्रालताख्य भवेत् । NS 4 104 105 pp 115 116, Bharatakosa, p 565, Sangitaratnakara, 7 662 663

त्रिपताका यदा हस्तौ व्यावृत्तौ परिवर्तितौ[1] ।
वैशाखस्थानकस्थित्वा कटी स्यात् छिन्नकं तदा ॥ ४९ ॥
वृश्चिको दक्षिण पादो रेचितो दक्षिण कर ।
किञ्चिन्नम्रा कटिर्यत्र तत्स्याद् वृश्चिकरेचितम्[3] ॥ ५० ॥
[4]स्यातामंसाश्रितो हस्तो व्यावृत्तपरिवर्तितो ।
निकुट्टितो पदो यत्रांसाश्रितं[5] करण मतम् ॥ ५१ ॥
॥ पाठान्तरम्[6] ॥
उर स्थो रेचितो हस्तावूर्ध्वाधो विप्रकीर्णितौ ।
आलीढ स्थानकं यत्र वक्षोरेचितकं[7] तु तत् ॥ ५२ ॥
किञ्चिन्नम्रस्तु वामोऽहि्(मोऽङ्घ्रि)र्दक्षिणस्तु निकुट्टित ।
[8]वामांसोपरि सन्न्यस्त मुच पार्श्वनिकुट्टितं[9] ॥ ५३ ॥

---

1 P omits परिवर्तितौ.

2 No 45 of Bharata cf अलपद्म कराग्रस्थ छिन्ना पर्यायश कटी ॥ १०५ ॥ वैशाखस्थानेनेह तच्छिन्न करण भवेत् । *NS* 4 105 106, p 116, *Bharatakosa* p 221 *Sangitaratnakara* 7 643 644

3 cf No 46 of Bharata वृश्चिक चरण कृत्वा स्वस्तिकौ च करावुभौ ॥ १०६ ॥ रेचितौ विप्रकीर्णौ च करौ वृश्चिकरेचितम् । *NS* 4 106 107 p 116 *Sangitaratnakara*, 7 661 662, *Bharatakosa*, p 634

4 P reads स्यातामंसाश्रितौ and यत्रांसाश्रित in this verse

5 cf *Vrscika* no 47 of Bharata बाहुशार्षाश्रितौ हस्तौ पाद पृष्ठाञ्चितस्तथा ॥ १०७ ॥ दूरसन्नतपृष्ठ च वृश्चिक तत्प्रकीर्तितम् । *NS* 4 107 108 pp 116 117 *Sangitaratnakara* 7 658 659 *Bharatakosa* p 634

6 Both P and H read this but the पाठान्तर is not quoted, and it does not appear that अंसाश्रित is given as an optional *Karana* for वृश्चिक रेचितम् Probably there was a verse defining वृश्चिक which is dropped in both P and H

7 cf no 48 of Bharata आलीढ स्थानक यत्र करौ वक्षसि रेचितौ ॥ १०८ ॥ ऊर्ध्वाधोविप्रकीर्णौ च व्यञ्जितं करण तु तत् । *NS* 4 108-109, p 117, *Sangitaratnakara* 7 652 654 *Bharatakosa*, p 646

8 P — वामांशोपरि 9 H — पार्श्वनिकुट्टिनम् ॥
cf No 49 of Bharata, हस्तौ तु स्वस्तिकौ पार्श्वे तथा पादौ निकुट्टितौ ॥१०९॥

ऊर्ध्वाध संस्थितौ हस्तौ व्यावृत्तौ परिवर्तितौ ।
आल्लाट पदो वामो ललाटतिलके[1] भवेत् ॥ ५४ ॥

व्यावृत्य कर्त्तरीमस्त्रौ( वक्षौ ) हस्तौ पार्श्वे तथा नतम् ।
यत्र स्याद्रेचित पादस्तत् क्रान्तं[2] करणं मतम् ॥ ५५ ॥

भूलग्ने दक्षिण कृत्वा कुञ्चितोऽन्य पदो यदा ।
स्थिश्चिच्च कुञ्चितौ हस्ता यत्र तत् [3]कुञ्चितं भवेत ॥ ५६ ॥

उरदेशे करौ ज्ञेयौ[4] दक्षिणश्च करोऽञ्चित[5] ।
चक्राकारभ्रमो यत्र ज्ञेय तच्चक्रमण्डलम्[6] ॥ ५७ ॥

---

यत्र तत्करण ज्ञय बुधै पार्श्वनिकुट्टनम् । AS. 4 109 110, pp 117-118, *Bharatal osa*, p 367, *Sangitaratnakara*, 7 669 670.

1 cf No 50 of Bharata, AS 4.110 111, p 118, *Bharatakosa*, p 567, *Sangitaratnakara*, 7 668 669

2 Cf No 51 of Bharata, पृष्ठ कुञ्चित कृत्वा व्यतिक्रान्तक्रम तत ॥ १११ ॥ आश्लिष्टौ च करौ कार्यौ क्रान्तके करण द्विजा । AS 4. 111-112, p 118, *Bharatakosa*, p 155, *Sangitaratnakara*, 7 655-657.

3 Cf. no 52 of Bharata, आद्य पादो नत कार्य सव्यहस्तश्च कुञ्चित ॥ ११२ ॥ उत्तानो वामपार्श्वस्थस्तत्कुञ्चितमुदाहृतम् । AS 4 112 113, pp. 118 119, *Bharatakosa*, p 138, *Sangitaratnakara*, 7. 674-675

4 P.—करा ज्ञेयौ 5. P —करोऽञ्चित

6 The *Cakramandalam*, no 53, of Bharata is different, cf प्रलम्बिताभ्यां बाहुभ्यां यद्यङ्गेणानतेन च ॥ ११३ ॥ अभ्यन्तरापविद्धः स्यात्तज्ज्ञेयं चक्रमण्डलम् । AS 4 113-114, p 119 also it is different from *cakramandalam* of *Sangitaratnakara*, 7 671 72 and of Jyayana quoted in *Bharatakosa*, p 195 It is comparable to *uromandala*, no 54 of Bharata, though possibly not identical with it, cf स्वस्तिकापसृतौ पादावपविद्धक्रमौ यदा ॥ ११४ ॥ उरो मण्डलकौ हस्तावुरोमण्डलिकं तु तत् । AS 4 114 115 p 119, cf, चार्यौ यद्यस्थिरावेते उरोमण्डलिनौ करौ ॥ ६७२ ॥ चक्रमण्डल तत् प्राहुस्तज्ज्ञाः... *Sangitaratnakara*, 7 672-673 for Jyayana, see, *Bharatakosa*, p 84

नितम्बे कुञ्चितौ हस्तौ स्वस्तिकापसृतौ पदौ ।
नम्रं च दक्षिणं पार्श्वं नितम्बस्वस्तिकं[1] च तत् ॥ ५८ ॥

[2]आक्षिप्तसञ्ज्ञकौ हस्तौ पादौ चाक्षिप्तरेचितौ ।
दृष्टिर्नता नतं पार्श्वं यत्राक्षिप्तं[3] तदुच्यते । ५९ ॥

आवर्तितो पताकाख्यो तात्रैव हि कृताञ्जली ।
अङ्घ्रिः अङ्घ्रि[4]...ङ्गुलितलश्चैतत्[5] तलविलासितम् ॥ ६० ॥

सार्धतालद्वयं पद्भ्यामन्तरं यत्र जायते ।
हस्तावप्यन्तरं[6]धरस्तादृश चार्गलं[7] तु तत् ॥ ६१ ॥

वृश्चिकश्चरणो वामो यत्र वामो लताकरः ।
विक्षिप्तं[8]च मुखं पार्श्वं विक्षिप्तं[9] करणं तु तत् ॥ ६२ ॥

1 There is no such karana in *NŚ* and the *nitamban* no 85 of Bharata *NŚ* 4 145 146, p 130 or of Jyayana *Bharatakosa* p 331, and *Sangitaratnakara* 7 714 715 seem to be different

2 P —आक्षिप्तपक्तौ

3 Cf no 55 of Bharata आक्षिप्त हस्तपादं च क्रियते यत्र वेगतः ॥ ११५ ॥ आक्षिप्तं नाम करणं विज्ञेयं तद् द्विजोत्तमाः । *NŚ* 4 115 116, pp 119 120 *Sangitaratnakara* 7 663 664 *Bharatakośa*, p 47

4 P —आहस्तांगुलाग्रभवतं तत

5 Cf no 56 of Bharata ऊर्ध्वाङ्गुलितलः पादः पार्श्वेनार्धं प्रसारितः । ११६ ॥ प्रत्याङ्गतलौ हस्तौ तलविलासितम् । *NŚ* 4 126 127 p 120 *Sangitaratnakara* 7 667-668 *Bharatakosa* p 243

6 H — स्त तात्र चाप्रगातु तत् ॥

7 Cf no 57 of Bharata कुट्टितः प्रगतः पादौ हौ तलान्तरमात्र च ॥ ११७ ॥ नर्ते च चानुगा हस्तं पुनः...तु तत् । *NŚ* 4 117 118 pp 120 121 cf also *Sangitaratnakara*, 7 664 665 *Bharatakosa* pp 27 28

8 P —तु

9 Cf no 58 of Bharata विक्षिप्तं हस्तपादं च पृष्ठतः पार्श्वतोऽपि वा ॥ ११८ ॥ एकमार्गगतं यत्र तद्विक्षिप्तमुदाहृतम् । *NŚ* 4 118 119 p 121 *Bharatakośa*, p 604 *Sangitaratnakara* 7 686-687

प्रलम्बितौ करौ यत्र दक्षिणश्चरण पुर ।
प्रसार्यावर्तयेत् शीघ्र तदा [1]वर्तितमुच्यते ॥ ६३ ॥

पार्श्वे च दोलयेयत्र कुञ्चितानन्तरं बुध [2] ।
करौ बाह्यतलौ कुर्याद् दोलापादे[3] प्रलम्बितौ ॥ ६४ ॥

रेचितौ च करौ यत्र [4]पार्श्वं चत्र विवर्तितम्[5] ।
वामो निवर्तितोऽङ्घि(तोऽङ्घ्रि)स्मिन् करण विनिवृत्तकम्[6] ॥ ६५ ॥

पार्श्वे तु स्वस्तिकाकारो कृत्वा भ्रान्त्वा निवर्तितो ।
हस्तावपि तथैवात्र [7]निवृत्ते करणे पुन ॥ ६६ ॥

पार्श्वक्रान्तं पदं कृत्वा पुरतो यत्र मुच्यते ।
विवलिता [8]तथा हस्ता पार्श्वक्रान्तं[9] तदुच्यते ॥ ६७ ॥

---

1 Bharata defines an *avartam karanam*, as no. 59, cf प्रसार्य कुञ्चितं पाद पुनरावर्तयेद् द्रुतम् ॥ ११८ ॥ प्रयोगवशगौ हस्तौ तदावर्तमुदाहृतम् । *NŚ* 4 119-120, p 121, for *avartam*, also see, Jyayana quoted in *Bharatakośa*, p. 61 Bharata defines *vartitam*, no 2 as follows—व्यावर्तौ मणिबन्धे तु व्यावृत्तपरिवर्तितौ ॥ ६२ ॥ हस्तौ निपतितौ चोर्वोर्वर्तितं करण तु तत् । *NŚ* 4 62 63, pp 96 97, see also *Bharatakosa*, p 587 and *Sangitaratnakara*, 7. 573 575 for *vartitam*.

2. H.—कुञ्चितानन्तराबध ।

3 Cf no 60 of Bharata, कुञ्चित पादमुत्क्षिप्य पार्श्वात्पार्श्वं तु दोलयेत् ॥ १२० ॥ प्रयोगवशगौ हस्तौ दोलापाद तदुच्यते । *NŚ* 4 120 121, pp 121-122, *Bharatakosa* p 237, *Sangitaratnakara* 7 676

4 H —पार्श्व 5. P —वार्तंतम्

6 Cf no 62 of Bharata, सूच्याविद्ध विधायाथ त्रिक तु विनिवर्तयेत् ॥ १२२ ॥ करौ च रचितौ कार्यौ विनिवृत्ते द्विजोत्तमा । *NŚ* 4 122 123, pp. 122-123, *Bharatakosa*, p 612, *Sangitaratnakara*, 7. 678-679.

7 H —निवृत्तकरण
Cf no 61 of Bharata, आक्षिप्त हस्तपाद च त्रिक चैव विवर्तयेत् (v. l च पारवर्तयेत् ॥ १२१ ॥ रचितौ च तथा हस्तौ विवृत्ते (v l निवृत्ते) करण द्विजा । *NŚ* 4 121 122 p 122 *Bharatakośa* on *nivrttam karanam*, p 335 *Sangitaratnakara* 7 677-678 calls it *vivrttam*

8 P omits तथा

9 No 63 of Bharata, cf. पार्श्वक्रान्तक्रम कृत्वा पुरस्तादथ पातयेत् ॥ १२३ ॥

ल्लाटे स्यात्करो¹ यत्र पृष्ठेऽङ्घ्रि (पृष्ठेऽङ्घ्रि) कुञ्चितो भवेत् ।
अङ्ग नम्र कटिर्नम्रा यत्र तत्पृष्ठकुञ्चितम्² ॥ ६८ ॥

पृष्ठतो वलित शीर्षे तथा पादोऽपि दक्षिण ।
ऊर्ध्वाध कुञ्चितौ हस्तौ तत् शीर्षवलितं³ मतम् ॥ ६९ ॥

कृत्वा पादमतिक्रान्त ⁴पुरो यत्र प्रसार्यते ।
वामहस्तो मुखाग्रे स्याद् अतिक्रान्तं⁵ तु तत्पुन ॥ ७० ॥

वामो लताकरो⁶ यत्र दक्षिण ⁷ पार्श्वग कर ।
⁸विवर्तित त्रिक पादावाक्षितौ तद् विवर्तितम्⁹ ॥ ७१ ॥

---

प्रयागवशगौ हस्तौ पार्श्वक्रान्त तदुच्यत । NŚ 4 123 124, p 123 *Bharatakosa*, p 366, *Sangitaratnakara* 7 680 681

1 H.—क्रौ

2 cf. no 64 of Bharata, पृष्ठत कुञ्चित पादो वक्षश्चैव समुन्नतम् ॥ १२४ ॥ तिलक च कर स्थाप्यस्तन्निस्ताम्भितमुच्यते । NŚ 4 124 125 p 123
There is no *prsthakuncita* known to Bharata, but *nistam bhita* of Bharata and *nisumbhita* of others cited here may be compared see *Bharatakosa*, p 335 quoting Jyayana, and *Sangitaratnakara* 7 682 683

3 Though *sirsavalitam* is not known to other texts it is very similar to *Vidyudbhrantam* no 65 of Bharata cf, पृष्ठत वलित पाद शिरसाप्य प्रसारयत् ॥ १२५ ॥ सर्वतो मण्डलाविद्ध विद्युद्भ्रान्त तदुच्यत । NŚ 4 125-126, pp 123 124 *Bharatakośa* p 610, *Sangitaratnakara*, 7 684 685 4 P—पुरता

5 Cf. no 66 of Bharata, आतेकान्तक्रम कृत्वा पुरस्तात्सम्प्रसारयत् ॥ १२६ ॥ प्रयागवशगौ हस्तावतिक्रान्ते प्रकीर्तितौ । NS 4 126 127, p 124 but cf *Bharatakosa* p 10 quoting Jyayana *Sangitaratnakara* 7 685 686

6 P—लतारौ 7 P—यदिश

8 P omits our verse 72b and 73ᵃ P has no. 53 twice and hence from 53 onwards the numbering in P is wrong, thus our v 72 is no 71 in P

9 Cf no 67 of Bharata आश्रित हस्तपाद च त्रिक चैव विवर्तितम् ॥ १२७ ॥ द्वितीयो रेचका हस्ता विवर्तितकमेव तद् । NS 4 127 128, p 124, *Bharatakosa*, p 619, *Sangitara'nakara*, 7.688 689

पृष्ठत· पुरतो न्यस्य दक्षिणाह्रि( णाङ्घ्रि )र्यदा कर ।
वामोऽह्रि( मोऽङ्घ्रि )र्ये परश्चोर्ध्वम्तद् गजक्रीडितं[1] तदा ॥ ७२ ॥

तलसस्फोटितौ हस्तौ पादौ [2]भूपीठघातकौ ।
भ्रमणं च चतुर्दिक्षु तलसंस्फोटितं[3] तु तत् ॥ ७३ ॥

अग्रतश्चरण न्यस्य दक्षिणश्च नत पर[4] ।
अञ्चितश्च करो गण्डे[5] गण्डसूचीति[6] तद्विद् ॥ ७४ ॥

भ्रान्ता कटी पदो भ्रान्तौ त्रिक च परिवर्तितम् ।
अञ्चितौ च करौ यत्र तदुक्त परिवृत्तकम्[7] ॥ ७५ ॥

जानूपरि पदो वाम सम स्याद्दक्षिण पद ।
पार्श्वं च सन्नतौ हस्तौ यत्र तत् पार्श्वजानुकम्[8] ॥ ७६ ॥

---

1. Cf. no 68 of Bharata, कण्ठञ्चित करा वामा स्ताहस्तश्च दक्षिण ॥ १२८ ॥ दाग्पादस्तथा चैव गजक्रीडितक भवेत् । *NS* 4 128 129 p 124, *Bharatakosa*, p. 164, *Sangitaratnal ara*, 7 689-690
2. H.—तौ पाठघातकौ
3. Cf. no 69 of Bharata, where only one foot is moved, our text thus differs slightly from *NS*, 4 129 130, pp 124 125, *Bharatakosa*, p 243, *Sangitaratnakara*, 7 691 695
4. H.—तत परम् । 5 P—गड़
6. Cf. no. 71 of Bharata, सूचापादो नतं पार्श्वमसौ वम स्थित कर ॥ १३१ ॥ द्वितीयश्चाञ्चितो गण्डे गण्डसूची तदुच्यत । *NS* 4 131-132, also see comm of Abhinavagupta, on *op cit*, pp 125-126, *Bharatakosa*, p 166, *Sangitaratnakara*, 7 690 692
7. H reads परिवर्तितम् Cf no 72 of Bharata, करौ प्रवर्तितौ हस्तौ सूचापादा विवर्तित ॥ १३२ ॥ पारज्ञानिर चैव परिवृत्त तदुच्यत । *NS* 4 132-133, pp 125-126 *Sangitaratnakara*, 7 703 *Bharatakosa*, p 359
8. Cf no 73 of Bharata which is slightly different, नत गम-स्थित पाद ऊरुपृ स्थितोऽपर ॥ १३३ ॥ मुञ्चस्तस्य वक्ष स्थ पार्श्वजानु तदुच्यते । *NS* 4 133 134, p 126 *Sangitaratnakara*, 7 695 696, *Bharatakosa*, p 367

पञ्चतालान्तरो पादो करो चापि प्रलम्बितो ।
पुरोऽवलोकिनी दृष्टिर्भवेद् गृध्रावलीनके[1] ॥ ७७ ॥
हस्तो प्रलम्बितो यत्र पादो च स्वस्तिकाकृती ।
नम्रं पार्श्वं नतं वक्त्रं यत्र तत् सन्नतं[2] मतम् ॥ ७८ ॥
अङ्गुष्ठेन यत्रा भूमिस्ताड्यते पाद एव वा ।
[3]कुञ्चितश्च समौ हस्तो यत्र सूची[4] तदुच्यते ॥ ७९ ॥
सर्वं सूचीगत लक्ष्म करणे यत्र सम्भवेत् ।
[5]वामोऽञ्चितो नतो हस्तस्त‍दर्द्धसूचीति[6] तन्मतम् ॥ ८० ॥
दक्षिणश्चरणं पृष्ठे वामं स्यादग्रतो यदि ।
सूच्यावृत्तो करो यत्र [7]सूचीविद्धाभिधं हि तत् ॥ ८१ ॥
[8]अपक्रान्त पदो यत्र दक्षिणं स्वस्तिकाकृती(ति) ।
करो च मणिबन्धस्था करणं तद विलोलितम्[9] ॥ ८२ ॥

1. Cf no 74 of Bharata पृष्ठ प्रसारितः पादः किञ्चिदञ्चितजानुकः ॥ १३४ ॥ यत्र प्रसारितौ बाहू तत्स्यात् गृध्रावलीनकम् । NŚ 4 134 135 pp 126 127, *Sangitaratnakara*, 7 697 *Bharatakosa*, p 181
2. Cf no 75 of Bharata उत्प्लुत्य चरणौ कार्यावग्रतः स्वस्तिकस्थितौ ॥ सन्नतौ च तथा हस्तौ सन्नतं तदुदाहृतम् । NŚ 4 135 136, p 127 *Sangita ratnakara*, 7 707 708 *Bharatakosa*, p 700
3. P — अकुञ्चितश्च समा हस्तो
4. cf no 76 of Bharata, कुञ्चितं पादमुत्क्षिप्य कुर्यादग्रस्थितं भुवि ॥ १३६ ॥ प्रयोगवशगौ हस्तौ सा सूची परिकीर्तिता । NŚ 4 136 137 p 127, *Bharatakosa* p 735 *Sangitaratnakara*, 7 698 699
5. H — वामाञ्चितो नतौ हस्तौ
6. cf no 77 of Bharata अलपद्मः शिरोहस्तः सूचीपादश्च दक्षिणः ॥ १३७ ॥ यत्र तत्करणं ज्ञेयमर्धसूचीति नामतः । NŚ 4 137 138 p 127 *Bharatakośa*, p 32 *Sangitaratnakara* 7 699
7. cf no 78 of Bharata पादसूच्या यदा पादो द्वितीयस्तु प्रविध्यते ॥ १३८ ॥ कटिवक्षःस्थितौ हस्तौ सूचीविद्धं तदुच्यते । NŚ 4 138 139 pp 127 128 *Bharatakośa*, p 736 *Sangitaratnakara*, 7 700 701
8. H — अपक्रान्तपदो
9. There is no *Vilolita* known to Bharata and others, but cf. no 79 *Apakrāntam* of Bharata, कृत्वोद्वाहनं पादमपक्रान्तक्रमं न्यसेत्

यदा निकुट्टितौ पादौ दक्षिणः कुञ्चितः करः ।
'ललाटस्थः करो यत्र तत्स्यादर्पितं स्मृतम् ॥ ८३ ॥

दण्डाकारं भवेत् पादं निकुञ्च्याग्रे पुनः परम् ।
आविद्धौ तु करौ यत्र 'दण्डपाताभिधं च तत् ॥ ८४ ॥

अञ्चितः कुञ्चितः पृष्ठे हस्तः पादौ मुखं तथा ।
उत्प्लुत्योत्प्लुत्य गमनं यत्र तद् हरिणप्लुतम्' ॥ ८५ ॥

अर्धाङ्गं वलितं पृष्ठे शेषमर्धं तथागतम् ।
'कुञ्चितप्रान्तहस्ताद्येन प्रेङ्खोलितं' मतम् ॥ ८६ ॥

रेचितौ च यदा बाहू हस्तौ चाभिमुखाङ्गुलौ ।
चरणौ स्वस्तिकाकारौ नितम्बे तूत्प्लुतिर्यदा' ॥ ८७ ॥

---

॥ १३९ ॥ प्रयागतश्चैव हस्तावस्थाने तदुच्यते । NŚ, 4 139 140, p 128, *Bhāratakośa*, p 21 *Saṅgītaratnākara*, 7 713

1. H —स्थानाग्र करः

2 cf no 81 of Bharata, आक्षिप्तौ पादौ निरथ परिवाहनम् ॥ रचितौ च तथा हस्तौ स्पर्शितमुदाहृतम् । NŚ 4 141 142, p 128 129, *Saṅgītaratnākara* 7 708 709 *Bhāratakośa*, p 712

3 cf. no 82 Daṇḍapāda of Bharata, नूपुरं चरणं कृत्वा दण्डपादं प्रसारयेत् ॥ १४२ ॥ क्षिप्राविद्धकरं चैव दण्डपादं तदुच्यते । NŚ, 4 142 43 p 129 *Saṅgītaratnākara*, 7 704 705, *Bhāratakośa* p 266

4 cf no 83 of Bharata अतिक्रान्तक्रमं कृत्वा समुत्प्लुत्य निपातयेत् ॥ १४३ ॥ जङ्घाञ्चितापरि क्षिप्ता तद्वद्धरिणप्लुतम् । NŚ 4 143 144 p 129, *Bhāratakośa* p 768 *Saṅgītaratnākara*, 7 702

5 P —कुञ्चितप्रान्तहस्त

6 cf no 84 of Bharata डोलापादक्रमं कृत्वा समुत्प्लुत्य निपातयेत् ॥ १४४ ॥ परिवृत्तत्रिकं चैव तत् प्रेङ्खोलितमुच्यते । NŚ 4 144 145 pp 129-130, *Bhāratakośa*, p 409 *Saṅgītaratnākara*, 7 706 707

7 P omits च

8 No 85 of Bharata cf भुजावूर्ध्वविनिष्क्रान्तौ हस्तौ चाभि(धो)मुखाङ्गुली ॥ बद्धा चारी तथा चैव नितम्बे करणे भवेत् । NŚ 4 145 146 p 130, *Bhāratakośa*, p 331, *Saṅgītaratnākara*, 7 714 715

व्यावृत्य [1]चरणन्यास कुञ्चितौ च करौ नतौ ।
किञ्चिच्च सन्मुखीभूतं[2] मुखं स्यात् स्खलिते[3] पुन. ॥ ८८ ॥

वाम. पादो भवेत्पृष्ठे दक्षिणस्त्वग्रगो यदि ।
नितम्बे कुञ्चितो वामो हस्तस्तत् करिहस्तकम्[4] ॥ ८९ ॥

रेचितो दक्षिणो हस्तो वाम शुकमुखो यदि ।
निकुट्टितौ तथा पादौ यत्र तत्र प्रमर्पितम्[5] ॥ ९० ॥

द्रुतं निवेशयेदग्रे वामोऽङ्घ्रि (मोऽङ्घ्रि) पृष्ठत.[6] पर. ।
पृष्ठेऽवलोकनं चापि सिंहविक्रीडिते[7] भवेत् ॥ ९१ ॥

कुञ्चितोऽर्द्धतलः [8]पादो [9]दक्षिणः स्यान्नतं शिर ।
कुञ्चितोऽसन्मुखो हस्तौ [10]सिंहाकर्षणसंज्ञके ॥ ९२ ॥

---

1 H.—चरण न्यास 2 H—सन्मुखाभूतो

3 cf. no. 86 of Bharata, तालपादक्रम कृत्वा हस्तौ तदनुगावुभौ ॥ १४६ ॥ रेचितौ घूर्णितौ वापि स्खलित करण भवेत्। NS 4 146-147, p 130, *Bharatakosa*, p 745, *Sangitaratnakara*, 7 716.

4. cf. 87 of Bharata, एको वक्ष स्थितो हस्त· प्रोद्वेष्टिततलोऽपर ॥ अञ्चितश्चरणश्चैव प्रयोज्य करिहस्तके। NS 4.147-148, pp 130-31, *Bharatakośa*, p 113, *Sangitaratnakara*, 7 710-711.

5 cf. no 88 of Bharata, एकस्तु रेचितो हस्तो लताख्यस्तु तथा पर ॥ प्रमर्पिततलौ पादौ प्रमर्पितकमेव तत्। NS 4 148-149, p 131, *Sangitaratnakara*, 7 711-712, *Bharatakośa*, pp 397-398

6. P.—पृष्ठग

7. Cf no. 89 of Bharata, अलात च पुर कृत्वा द्वितीय च द्रुतक्रमम् ॥ हस्तौ पादानुगौ चापि सिंहविक्रीडिते स्मृतौ। NS 4. 149-150, pp 131, *Bharatakośa*, p 728, *Sangita ra*, 7 717-18.

8. P.—पादौ.

9. P.—दक्षिण स्या०

10. Cf. no. 90 of Bharata, पृष्ठप्रसर्पित पादस्तथा हस्तौ निकुञ्चितौ ॥ पुनस्तथैव कर्तव्यौ सिंहाकर्षितके द्विजा। NS 4 150-151, pp. 131-132, *Bharatakośa* p. 729, *Sangita-ra*, 7. 718-719

कुञ्चितो कर्त्तरी यस्त्रो(यस्तौ) करो वक्षसि यत्र तु ।
ऊर्ध्वौ [1]पार्ष्ण्योश्च सङ्घट्टात् पार्ष्णिसङ्घट्टितं[2] मतम् ॥ ९३ ॥

वाम प्रलम्बित पादस्तथा हस्त प्रलम्बित ।
दक्षिण कुञ्चितो यत्र भवेदुपसृतं[3] च तत् ॥ ९४ ॥

पादाग्रे तलसञ्चाराद्धट्टित भूतल यदा ।
पार्श्वनिर्वर्तित चेत् तलसङ्घट्टितं[4] तदा ॥ ९५ ॥

[5]लताख्यो दक्षिणो हस्तस्तथा वामश्च रेचित ।
नम्रौ पादौ नता ग्रीवा यत्र तज्जनितं[6] स्मृतम् ॥ ९६ ॥

कुञ्चितो दक्षिण पाद पतितोत्पतित पर ।
पादवच्च करो[7] यत्र पतितोत्पतितं[8] तु तत् ॥ ९७ ॥

---

1 P—पार्ष्णाश्च

2 There is no *karana* of this name given by Bharata and others

3 H—उपश्रित Cf no 92 of Bharata, which seems to be different from our *upasrtam*, आश्लिष्टचरणश्चैवा हस्तौ तस्यैव चानुगौ ॥ आनत च तथा गात्र तथोपसृतक भवत्। *NS* 4 152 153, p 132; *Bharatakosa*, p 82, *Sangitaratnakara*, 7 727 728

4 Cf no 93 of Bharata, दोलापादक्रम कृत्वा तलसञ्चारतौ करौ ॥ रेचयेच कर वाम तलसङ्घट्टिते सदा । *NS* 4 153-154, pp 132-133, *Bharatakośa*, p 243, *Sangitaratnākara*, 7 729 730

5 H—लताभ्या

6 Cf no 94 of Bharata, एकौ वक्षःस्थितो हस्तौ द्वितीयश्च प्रलम्बित ॥ तलाग्र-संस्थित पादौ जनिते करण भवेत् । *NS* 4 154 155, p 133 *Bharatakośa*, pp 223 24, *Sangitaratnakara*, 7 726 727

7 P—करौ

8 Bharata gives, as no 95, *avahittham* cf जानत करण कृत्वा हस्तौ चाभिमुखाङ्गुली ॥ शनैर्निपतितौ चैव ज्ञय तदवहित्थकम् । *NS* 4 155 156, pp 133 34, also *Sangitaratnākara*, 7 720 723, *Bharatakosa*, p 41

ऊर्वो [1]पा(प)दोश्च सङ्क्षेपो मनाक् पार्श्वे नत तथा ।
ऊर्ध्वबाहु करो वाम [2]पादोरुश्लिष्टके भवेत ॥ ९८ ॥

निकुट्टितो पदो न्यस्य यत्रोत्प्लुत्य प्रवर्तनम् ।
[3]कुञ्चितो रेचितौ हस्तो तदेलाक्रीडितं[4] मतम् ॥ ९९ ॥

[5]उ(ऊ)रौ विवर्तितो पादो रेचितो ललित कर ।
एताभिधे (घ) परो[6] यत्र तदूरुवृत्तमुच्यते[7] ॥ १०० ॥

एताभिधौ करो पादो शिथिलौ च नत शिर ।
हावभावान्वित वक्त्र मदनस्खलिते[8] भवेत् ॥ १०१ ॥

कुञ्चितोर्ध्वमुखे पादे द्वितीये चाग्रत स्थिते ।
हस्तौ दोलामुखोद्वृत्तो [9]पादाक्रान्तं विदुर्बुधा ॥ १०२ ॥

---

1 P —पदोश्च 2 — पदाराश्लष्ट

Bharata does not give this *karana* but he gives *nivesam,* as no 96 which is different Cf करौ वक्ष स्थितौ कार्यावुरो निभुग्न मेव च ॥ मण्डलस्थानक चैव निवश करण तु तत् । *NS* 4 156 157 pp 133 134 also *Sangitaratnakara* 7 724 *Bhara akosa* p 335

3 P —कुचितेरेचितौ

4 Cf no 97 of Bharata तल्पश्चरपादाभ्यामुत्प्लुत्य पतन भवत् ॥ सनत वाम्त गात्रमलकाक्रीडित तु तत् । *NS* 4 157 158 p 134 *Bharatakosa* p 94 *Sangitaratnakara,* 7 725 726

5 P —उरु 6 H —करौ

7 Cf no 98 *urudvrttam* of Bharata करमावत्तकरणमूरुपृष्ठाञ्चन न्यसत् ॥ जङ्घाञ्चिता तथात्वृत्ता ह्यरूवृत्त तु तद्भवत् । *NS* 4 158 159 p 134 *Sangitaratnakara* 7 742 743 *Bharatakośa* p 86

8 Cf no 99 of Bharata, करौ प्रलम्बितौ कार्यौ शिरश्च पार्श्वाहतम् ॥ पादौ च वलिताविद्धौ मदस्खलितके द्विजा । *NS* 4 159 160 pp 134 135 *Sangitaratnakara,* 7 734 735 *Bharatakosa* p 460

9 Cf no 100 *Viṣnukra itam* of Bharata पुर प्रसारित पाद कुञ्चित्वा गगनान्मुख ॥ करौ च रेचितौ यत्र विष्णुक्रान्त तदुच्यते । *NS* 4 160 161, p 135 *Sangitaratnakara,* 7 732 , *Bharatakośa,* p 625

एताभिध करो वामो दक्षिण कुञ्चितो यदि ।
कटिच्छि(श्लि)ष्टा पदो नम्रो तल्लतार्गलितं[1] भवेत् ॥ १०३ ॥
वक्ष न्यटिस्थितो हस्तो कुञ्चितो च नत मुखम् ।
निकुट्टित पदो वामस्तत् स्यात् "कटिनिकुट्टितम् ॥ १०४ ॥
सन्मुखस्थाङ्गुली हस्तो दक्षिणाङ्गस्थकूर्परो ।
वामभागास्थित पादो वाम उद्घाटितं[3] भवेत् ॥ १०५ ॥
निकुट्टित पदो यत्र कटिर्भ्रान्चितौ करो ।
कुञ्चितोंऽह्रि(सोऽङ्घ्रि)र्नत पार्श्वे 'वृषभक्रीडितं मतम् ॥ १०६ ॥
लोलिताववतित शीर्षं रेचितो च तथा करो ।
पादो च "लोलितो यत्र करण तच्च लोलनम्[6] ॥ १०७ ॥
स्वस्तिकापसृतौ पादौ दक्षिणाङ्गस्थित मुखम् ।
एतारेचितको हस्तो नम्रा नागापसर्पितौ[7] ॥ १०८ ॥

---

1 This is not known to Bharata but cf no 101, *san bl ra itam* of NS —करमावर्तिते कृत्वा ह्युरुद्वृत्त निकुञ्चयन् ॥ ऊर्ध्वेत तथावद्ध सम्भ्रान्त करण तु तत् । NS 4 161 162 135, *Bharatakosa*, p 710 *Sangitaratnakara*, 7 736 737

2 Cf *Vişkambham*, no 102 of Bharata, अपाद्ध कर सूच्या पदैन्व निकुट्टित ॥ वक्षस्थ करो वामो विष्कम्भे करण भवत् । NS 4 162 63, p. 135, *Sangitaratnakara* 7 737 739 *Bharatakosa* p 624

3 Cf *Udghattitam* no 103 of Bharata पार्ष्णी उद्घाट्टतौ वायौ तल सन्धार्गो करौ ॥ नतत पार्श्वे कर्तव्य बुधैरुद्घट्टिते सदा । NS 4 163 164 pp 135 136 *Sangitaratnakara*, 7 740 *Bharatakosa* p 75

4 P —वृषभक्रीडित Cf no 104 of Bharata प्रयुज्यालातक पूर्व हस्तौ चापि हि रेचयेत् ॥ कुञ्चितावश्चितौ चैव वृषभक्रीडित सदा । NS 4 164 165 p 136 *Sangitaratnakara* 7 744 745 *Bharatakosa* p 634

5 H —लालनौ

6 Cf no 105 of Bharata रेचितावश्चितौ हस्तौ लोलौ वर्तित शिर । उभया पार्श्वयोर्यत्र तल्लोलितमुदाहृतम् । NS 4 165 166 pp 136 37, *Bharatakosa*, p 575, *Sangitaratnakara* 7 733 734

7 Cf no 106 of Bharata स्वस्तिकापसृतौ पादौ शिरश्च परिवाहितम् । रेचितौ च तथा हस्तौ स्यातां नागापसर्पिते । NS 4 166 167 p 137 *Bharatakosa* p 314, *Sangitaratnakara* 7 745 746

हस्तश्च हृदये वामो दक्षिणस्तदध[1] करः ।
नत वक्त्र नतौ पादौ शकटास्ये विदुर्बुधा[3] ॥ १०९ ॥

ऊर्ध्वाकृत पदौ वामो वामो हस्तश्च रेचित ।
उन्नत च तथा वक्षो गङ्गावतरणे[4] भवेत् ॥ ११० ॥

करणाना समाना चेत्युक्तमष्टोत्तरं शतम् ।
विषमाणा च तल्लक्ष्म[5] योगिनामासनेषु यत् ॥ १११ ॥

( इति करणानि )

द्वात्रिंशदङ्गहारा स्यु [6]करणैर्जनितास्तु ते ।
भ्रमरीश्च तथा चारीर्द्वात्रिंशत्सम्मिता विदु ॥ ११२ ॥

अङ्गहारादिनामानि कथ्यन्ते तानि साम्प्रतम् ।
तथा सङ्घाङ्गहाराणामथ सङ्क्षेपतस्त्विह ॥ ११३ ॥

करणैस्त्रिभि कलापश्चतुर्भि खण्ड[7] उच्यते ।
सङ्घात पञ्चभिर्मिलैश्चाङ्गहार[8] करणोद्भव[9] ॥ ११४ ॥

---

1. P.—दक्षिणस्तथ
2. Cf no. 107 of Bharata, निषण्णाङ्गस्तु चरण प्रसार्य तल्सञ्चरम् ॥ उद्वाहितमुर कृत्वा शकटास्य प्रयोजयेत् । NS 4 167 168 p 137, *Bharatakośa*, p 651, *Saṅgītaratnakara*, 7 741-742
3. H —बुधा विदु ॥
4. Cf no 108 of Bharata ऊर्ध्वाङ्गुलितलौ पादौ त्रिपताकावधामुखौ ॥ हस्तौ शिरस्सन्नत च गङ्गावतरणे स्थिति । NS 4 168-169 pp 1 7-138, *Bharatakosa* pp 163-164 ; *Saṅgītaratnākara*, 7 747-748
5. H —लक्ष्मायोगि॰ 6 P —कार्णै॰
7. P —धाङ्गहारा करणोद्भवा ॥
8. Cf खण्डस्त्रिभिस्त्यात्करणैर्व्यायामो मध्यमस्तथा ।—वेम quoted in Bharatakośa, p 160 Kumbha quoted in Bharatakośa, p 787, however, says —त्रिभि कलापश्चतुर्भि खण्डो मत । षड्भि पञ्चभि सङ्घातोऽङ्गहारोऽष्टभि ॥ Also see *Saṅgītaratnākara*, 7 792 Also see, NS 10 1 4, Vol II pp 93 94
9. For *aṅgahāra* see *Bharatakośa* pp 787 788 quoting *Kumbha*, *Hammira*, *Saṅgītanṛtyākara* *Nṛttaratnāvalī* and *Aśoka*, and see *ibid*,

हरिप्रियश्च₁ पर्यस्त₂ सूचीविद्धोऽ₃पविद्धक₄ ।
¹आक्षिप्तो₅दुद्घट्टितो₆ चैव विष्कम्भ₇श्चाल्पिपल्लव₈ ॥ ११५ ॥

भुजङ्गत्रस्ताञ्चितश्चैव₉ करिसम्फोटितस्तथा₁₀ ।
रेचितस्वस्तिकाधश्च₁₁ पार्श्वस्वस्तिकसज्ञक₁₂ ॥ ११६ ॥

वृश्चिकापसृतो₁₃क्षिप्तो₁₄ निकुट्टो²₁₅ विलसन्मद₁₆ ।
गतिमण्डल₁₇सङ्घट्टो₁₈ परिच्छिन्नो₁₉ भुजाञ्चित₂₀ ॥ ११७ ॥

⁴परावृत्ता₂₁ रात₂₂ पार्श्वच्छेदारयो(स्या)₂₃ विद्युतो भ्रम₂₄ ।
उद्वृतश्च₂₅ तथालीढो₂₆ रेचित₂₇ स्फुरितस्तथा₂₈ ॥ ११८ ॥

⁵कटीच्छिन्नो₂₉ महोद्वृत्त₃₀ स्तथा स्याज्जयदर्पक₃₁ ।
⁶अर्द्धनिकुट्टकश्चेति₃₂ द्वात्रिंशत्सङ्ख्यया त्वमी ॥ ११९ ॥

इत्यङ्गहाराः⁷ ।

अन्तर्भ्रमरिका पूर्वा बाह्यभ्रमरिका तत ।
अल्गभ्रमरी चैव चक्रभ्रमरिका परा ॥ १२० ॥

⁸छत्रभ्रमरिकाऽतश्च रेचितभ्रमरी तथा ।
तिरिपभ्रमरी चेव ⁹चित्तभ्रमरिकाष्टमी ॥ १२१ ॥

---

pp 6 7 Also see, *Sangītaratnakara*, 7 789 ff. and comm on (Adyar ed Vol. IV), pp 252 ff

1 H — आक्षप्ता₅दुघाटतौ 2 H — ₈श्चापिप्ल्व ।

3 H — निकुट्टी 4 P — परावृत्ता₂₁त्त

5 H — करीटीछिन्ना 6 H — अद्धनि कुट्टकश्चेति

7 For lists of *angaharas* see *NŚ* 4 19 27 pp 88 90 and for *angaharalakṣaṇa* according to Bharata, see, *NŚ* 4 175 ff pp 138 ff The first one is known as *Sthirahasta* or *Harapriya* Also see *Saṅgītaratnākara*, 7 789 ff and comm on *op cit* pp 252 ff For a different tradition about 24 *aṅgaharas* see *Bharatarnava* Chp IX pp 289 310

8 P — चक्रभ्रमरि • 9 P — चैव चित्त•

प्रत्येकं ताश्चतुर्धा स्युर्नाभसी भूमिसम्भवा[1] ।
ऊर्ध्वस्थाधःस्थिता चेति भ्रमर्यो दन्तसम्मिता ॥ १२२ ॥

इति भ्रमर्यः[2]

कटेरधोभगाश्चार्यस्ता स्युः षोडश भूमिजा ।
षोडशाऽपि नभोजाता द्वात्रिंशत्सङ्ख्ययेति ता ॥ १२३ ॥

स्थितावर्ता भ्रमतली[3] नेडकीक्रीडिताश्चिता[4] ।
ऊरूद्वृत्तोत्सन्दिता च विच्यवा(वा)[5] रेचिकोद्धिका[6] ॥ १२४ ॥

शकटास्या च जनिता विद्धा वीची सुबाहुरा[7] ।
उद्वेष्टिता च सङ्लिष्टा भूमिचार्यस्तु षोडश(श) ॥ १२५ ॥

---

1 H —॰नाभसी भूमिसम्भवा ।

2 *Bhramaris* are not referred to by Bharata. Sārangadhara in his *Sangītaratnākara*, 7 749 ff refers to *Deśīkaraṇas* wherein he describes several *utplutikaraṇas*. The *utplutikaraṇas* include *Bhramari*, बाह्यभ्रमरी, अन्तर्भ्रमरी, छन्नभ्रमरी, तिर्यग्भ्रमरी अलगभ्रमरी, चक्रभ्रमरी, अङ्घ्रिभ्रमरी शिरोभ्रमरी, दिग्भ्रमरी,—*Sangīta-ra*, 7 755 and comm on *op cit*, Vol IV pp 241-242, and *op cit*, 7 775 782 defining these nine *Bhramaris* It is interesting to note that nine *Bhramaris* are defined even though in v 755 it is said—सप्त भ्रमर्यः भ्रमरी शिरःपूर्वा दिगादिसा । ७५५ ॥

Our text names eight *Bhramaris*, we have रचितभ्रमरी for उचितभ्र॰ or आघ्नभ्र॰ and चित्तभ्र॰ for शिरोभ्र॰ of Sārangadeva Since P Manuscript reads अचितभ्र॰ for चित्तभ्र॰ in v 121 of our text, it is just possible that the reading रचितभ्र॰ in 121ᵇ is wrong in both P and H manuscripts For other definitions of the different *Bhramaris*, see *Bharatakośa*

The eight *Bhramaris*, noted above by our text, are again four-fold नाभसी, भूमिसम्भवा, ऊर्ध्वस्था and अधःस्थिता and thus make a total 32 *Bhramaris* in all

3 P.—॰भ्रमन्तली. 4 H.—लेडितासीडनो च ता ।

5. H —विच्यवा 6 P —रेचिकोद्धिका ।

7. H.—स्वाहुरा

निकुञ्चान्ता दोलपादा दण्डा नूपुरपादिका[1] ।
[2]अतिक्रान्तोऽथ जानुश्चालाताक्षिप्ताऽथ सूचिका ॥ १२६ ॥

भुजङ्गा घूर्णितोन्मत्ता सङ्क्षिप्ता तिर्यगञ्चिता ।
उत्प्लुतालगसंस्थाना चार्य षोडश नाभसा ॥ १२७ ॥

इति चार्य.[3] ॥

एतल्लक्ष्माण्यल्पनाक्यैर्न ज्ञायन्ते यतस्तत ।
एतेषा लक्षण [4]चात्र नोक्त ग्रन्थस्य गोरवात् ॥ १२८ ॥

कालेऽस्मिन्नर्त्तका मूर्खा विद्वास साधका न हि ।
न नर्त्तकान्विनाभ्यास [5]शास्त्रात् सिद्धिर्न त विना ॥ १२९ ॥

आबाल्यात्संस्कृते हि साध्यन्ते ते स्वभाषया ।
स्वाभ्यासभाषया ते तज्जानते [6]नान्यभाषया ॥ १३० ॥

नृत्याङ्गास्या गिर क(का)श्चिद्[7] वक्ष्ये नर्त्तकभाषया[8] ।
विशेषतो हि सिद्धयन्ति[9] चोरवचे स्वभाषया ॥ १३१ ॥

तद्यथा—मूलश्चमु(मउ) [10]चालश्चमु(मउ) दण्डवाडश्चमु(मउ) बड्ठा[11] अलीढ ।

---

1 H —नूपुरपा टका । 2 H — अतिक्रांतोऽथजानुश्चालाता०

3 The *Carıs* are well known The lists of Bharata and Sarangadeva generally agree Cf *NŚ* 10 14 29 30 47 Vol II (G O S ed) pp 96 107 and *San itaratnakara* 7 898 965 pp 277 298 For the different *Carıs* also see *Bharatakosa* It may be noted that Sarngadeva gives separate lists of *Des carıs* also in *op cit* 7 908 916

The lists of the two classes of *Cārıs* given by our text do not fully agree with those of Bharata and Śarngadeva

4 H —चारी 5 P —शास्त्रिद्धर्न

6 P —नह्यु० 7 P —कानि

8 P —वक्ष्यऽनतभाषया 9 P —सिद्धंते

10 P —ना(चा)लश्रु 11 H —बड्ढी

ऊभी अलीढ । चित्रगाडु(डउ) झलकणी[1]।

एते सप्तभ्रमाः ।

अन्येऽपि नृत्यभावाः—गाडलुल्यु(ल्यउ)[1] ।
पावटउ । [2]माठलियउ सिहरियउ[3] । तिरपिउ[4] ।
वट्टी [5]छडक । ऊभी छडक । आविंडु(।) पाछिंडु[6] ।
एकसरा(।) दुसरा प्रमुखाः ।

नृत्यस्याङ्गानि चैतानि तथान्यान्यपि साधक. ।
कथं नु साधयेत् कुत्रेत्यभ्यासार्थमिह[7] ब्रुवे ॥ १३२ ॥

शुभे दिने चन्द्रबले [8]नृत्येऽभ्यास समारभेत् ।
सिक्तासहिता रङ्गभूमिरन्त्र प्रकल्प्यते[9] ॥ १३३ ॥

शारदां च नमस्कृत्य चण्डिकां नाट्यदेवतां ।
पश्चिदं च सम्पोप्योपाध्यायं [10]तु प्रपूजयेत् ॥ १३४ ॥

---

1. P.—गाल्लु यउ. Possibly the correct reading was गाडुल्यउ.
2. H.—माठ्यीउ P.—माठुलियउ.
3. H.—सिहरिअउ.
4. P.—तिरियउ
5. P.—वटका.
6. H.—आछिंडु पाछिंडु
The emendations in the readings of the *nartaka bhāṣā* suggested above are tentative The words seem to be of old Rājasthāni or Gujarati which as Shri Umashankara Joshi, has suggested, should better be called "Māru-Gurjara" I consulted some South Indian friends who suggested that these terms might also have been current in old Kannada and Telugu, but they are not sure about it. I believe these words are from the old *nartaka bhāṣā* of Western India, especially, Rājasthān and Gujarat. The मरकार in मरकारलक्षण्न् of v 143 below is an old Māru-Gurjara term, found in Varṇakasamuccaya, ed. by Dr. B. J. Sandesara.
7. H.—मिहेवुं.
8. H.—नित्यम्यासे.
9. P.—प्रकल्पते.
10. P. omits तु. H.—तु पूजयेत्.

नृत्योपजीवी कन्या वा राजकन्याथ कौतुकी ।
तत्र सूत्रश्रमाभ्यासं कुर्यात्प्रातर्बुभुक्षित(ता)[1] ॥ १३५ ॥

कृताभ्यासे तदङ्गजातं[2] कारयेदङ्गमर्दनाम् ।
बहुभ्यसाभिषिच्याशु पोषयेत् स्निग्धभोजने ॥ १३६ ॥

समस्ताभ्याससंयुक्ता नर्तकी पात्रमुच्यते ।
पट्टबन्धे कृते पात्रं राज्ञोऽग्रे नृत्यमाचरेत् ॥ १३७ ॥

महोत्सवे विवाहादौ कर्तव्यं नृत्यमुत्तमम् ।
[3]वादनाद्वजरस्याथ पात्रं स्याच्चरणान्वितं ॥ १३८ ॥

कुर्यात्पुष्पाञ्जलिक्षेपं पात्रं रङ्गाङ्गणे ततः ।
गीतगाथानुगं नृत्यं कुर्याच्छुल्कं न तत् क्वचित् ॥ १३९ ॥

इति पद्धतिलक्षणम् ॥

तूर्यत्रयनिधिः श्रीमान्दक्षः शृङ्गारकीर्तिभाक् ।
गुणागुणविशेषज्ञो दाता सभ्यः सभापतिः ॥ १४० ॥

इति सभापतिलक्षणम् ॥

सावधानास्तु मध्यस्थाः प्रयोगज्ञा बहुश्रुताः ।
सुकुमारगिरो दानशूरा सभ्याः स्युरुत्तमाः ॥ १४१ ॥

इति सभ्यलक्षणम् ॥

दातारो नृपपार्श्वस्थाः सुगुणज्ञा बहुश्रुताः ।
विवेचकाश्च श्रीमन्तो ये लोकास्तन्मयी सभा ॥ १४२ ॥

इति सभालक्षणम् ॥

तेषां कलावतां मध्ये मुख्यो वाङ्मयकारकः[4] ।
[5]शास्त्रज्ञश्च प्रयोगज्ञः सम्यग्गीतकरो मतः ॥ १४३ ॥

इति वाग्गेयकारलक्षणम्[6] ॥

---

1 H—बुभुक्षिता 2 H—तत्रश्च
3 H—वाजनाद्व॰ 4 P—वाग्गेयकारक । 5 P.—शास्त्रज्ञ
6 *Baskāra* is mentioned in *Varṇikasamuccaya* (Baroda, 1956), Vol I pp 13, 14 49

गन्धर्वो बहुगीतज्ञो माधुर्यात् श्रुतिमोऽस्यष्टत् ।
[1]यद्गीतेन जन सर्वो रज्यते स तु रञ्जक ॥ १४४ ॥

इति गन्धर्वरञ्जकलक्षणम् ॥

सुगीतनृत्यवाद्यस्तु मनो यस्य न रज्यते ।
स पशुर्नररूपस्थो दाता चेन्नाङ्गनी स च ॥ १४५ ॥

[2]आलोच्य शास्त्रपाथोधिं ज्ञानश्रीया प्रकाशिता[3] ।
तया त्रिभुवनं सर्वं सुखीभवतु शाश्वतम् ॥ १४६ ॥

बध्नीत [4]धृतिं विबुधा पण्डितजनलम्भार्थवद्धेऽस्मिन् ।
सङ्गीतोदधिसारे सुशास्त्ररत्ने निरुपमाने [तु] ॥ १४७ ॥

बुधपितृसोमाल्हादिनि तद्दर्शनजातसुरसकल्लोले ।
क्रीडत सङ्गीताब्धावेतद्वाक्यप्रवाहेण ॥ [5]१४८ ॥

राजान प्रतिबोधिता कति कति ग्रन्था स्वय निर्मिता ।
वादीन्द्रा कति निर्जिता कति तपांस्युग्राणि तप्तानि च ।
[6]श्रीमद्धर्षपुरीयगच्छमुकुटे श्रीसूरिसुत्रामभि
[7]सच्छिष्यैर्मुनिभिश्च वनितरवर(श्ववानितवर)[8] वाग्मीश्वरीतन्मितम् ॥ १४९ ॥

तद्गच्छेऽभयदेवसूरिसुगुरो श्रीकर्णभूपेन यत्[9]
[10]संज्ञा सामल्धारिणोऽपि मलधारीति स्वयं निर्मिता ।
तद्वंशे नरचन्द्रसूरिरभवत् सच्छास्त्रसङ्गीतभृत् ।
तत्पार्श्वे तिलकाभिधो गुरुरभूद्यद्वचीक्षणसहम् ॥ १५० ॥

1 P —यज्ञानेन.
2. P.—आलोक्य
3 P —प्रशिना
4 P —धृति
5 H —॰प्रवाहेण
6 P —श्रीमद्धर्षपुरीय॰
7 P —सच्छिष्यै॰
8 P —॰निच वेलितवर.
9 H —
10 H —संज्ञा त सम्धारिण इति स्वयं
P —संज्ञा सल्लधारिणोऽपि मलधारीति स॰

तत्पट्टाद्रिरविश्रिर विजयता सन्मार्गमन्दर्शक
सूरीन्द्र निल राजशेखरगुरुर्नादीभपञ्चानन ।
शिष्यस्तस्य पुन सुधाकलश इत्याख्या दधानो व्यधात्
सङ्गीतोपनिषत्सुमारमखिल विज्ञानिसोऽस्याय यत्[1] ॥ १५१ ॥

[2]सङ्गीतोपनिषद्ग्रन्थं साष्टाग्निशशिवत्सरे ।
[3]ऋतुशून्ययुगेन्द्वब्दे तत्सारं चापि निर्ममे[4] ॥ १५२ ॥

इति श्रीमलधारिगच्छमण्डन वादीन्द्र श्रीराजशेखरसूरिशिष्यवाचनाचार्य श्रीसुधाकलशविरचिते सङ्गीतोपनिषद्ग्रन्थसारोद्धारे नृत्यपद्धतिप्रकाशनो नाम षष्ठोऽध्याय ॥ छ ॥[5]

---

1 P —तत,

2 After v 151, P. adds the following as verse 152—
तावद् दुर्वादि वादनाम-धाप कथं कुत ।
श्रीजैनशासने यावत् सुधाकुम्भो विजृम्भते ॥ १५२ ॥
Obviously, this self praise does not seem to have been composed by Sudhakalasa himself

3 H —ऋतुशून्ययुगेन्द्व(? .द )ब्दे

4 P —निर्म्मिते

5 P adds—संवत् १५११ वर्षे पूर्णिमापक्षे श्री पुण्यप्रभसूरीणां शिष्य श्रीभावदेवैर्इ सङ्गीतशास्त्रमङ्कि ॥ यादृशं पुस्तके दृष्टं तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ H add —यादृशं पुस्तके दृष्टं तादृशं लिखितं मया (।) यदि शुद्धमशुद्ध वा मम दोषो न दीयते ॥ १ (॥) संवत् १६१४ वर्षे फाल्गुन वदि ५ रवौ श्री आगमगच्छे विडालंबीया (?) श्री आणंदरत्नसूरि तत्पट्टे श्री ज्ञानरत्नसूरि वाचक श्री उदय सागर (?) तत्पट्टे वाचनाचार्य श्रीमंगलमाणिक्य इदं प्रथम लिखितं । बदिरि ग्रामे ॥
Then follow a few verses of Sangitasarakalika for which see Introduction.

तत्पट्टाद्रिविधिरं विजयता सन्मार्गसन्दर्शक.
सूरीन्द्रः किल राजशेखरगुरुर्वादीभपञ्चानन.
शिष्यस्तस्य पुनः सुधाकलश इत्याख्या दधानो व्यध
सङ्गीतोपनिषत्सुमारमखिलं विज्ञानिसौख्याद

[1]सङ्गीतोपनिषद्ग्रन्थं खाष्टामिशशिवत्सरे[2] ।
[3]ऋतुशून्ययुगेन्द्वब्दे तत्सारं चापि निर्ममे[4]॥ १५

इति श्रीमलधारिगच्छमण्डन-वादीन्द्र श्रीराजशेखरसूरिशिष्यवाचना
स्वोपज्ञसङ्गीतोपनिषद्ग्रन्थसारोद्धारे नृत्यपद्धतिप्रकाशनो नाम

---

1. P.—तद.
2. After v. 151, P. adds the followi
   तावद् दुर्वादिवादनाख्यात- वर्थं सु
   श्रीजैनशासने यावत् सुधाकुम्भो दि

   Obviously, this self-praise does
   composed by Sudhākalaśa hims
3. H.—ऋतुशून्ययुगेन्द(? न्द्व)ब्दे.
4. P —निर्म्मिते.
5. P. adds—संवत् १५११ वर्षे पूर्णिमागच्छे
   सङ्गीतशास्त्रमऽलेखि ॥ यादृशं पुस्तके दृष्टं तादृशं लि
   दोषो न दीयते ॥ H. adds—यादृश पुस्तके
   शुद्धमशुद्धं वा मम दोषो न दीयते ॥ १ (॥)
   श्री आगमगच्छे विज्ञानंदीका (?) र्थ. आणंदरत्न
   उदय सागर (?) तच्छि वाचनार्थं श्रीमंगल्माणि
   Then follow a few verses of Sa
   see Introduction.